श्रीविष्णुतीर्थविरचिता

# षोडशी

॥ हरिः ॐ ॥

## ॥ अथ बन्धकप्रकरणम् ॥

श्री गुरुभ्यो नमः ॥ निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ॥ न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवंश्चित्रमर्च ॥ अत्रेदं रहस्यम् । अस्ति हि भगवतो रूपद्वयम् । तत्र जीवान्तःस्थामद्यं बहिष्ठं द्वितीयम् । तदेव च प्रलये सकलावतारलयाधिष्ठानं प्रधानम् । तस्मादेव च सृष्टावखिलावताराणां सम्भवः । आद्यं त्वनन्तरूपैः प्रलये सृष्टौ च जीवानधिष्ठायावस्थितमेव न त्वेकत्र लीनम् । इदमेव च बिम्बरूपम् । एतज्ज्ञानादेव च मोक्षः । एतदेव हि विज्ञानमिति गीयते । रूपान्तरज्ञानोपासनादि तु प्रतिबन्धकनिवर्तकतयैतज्ज्ञानोपासना- दावेवोपयुज्यते ।

इयांस्तु विशेषः । यस्मिन्कल्पे ये जीवाः सृज्यास्तत्कल्पपर्यन्तमनादितो रमामात्रप्रतीकतया ताञ्जीवानधितिष्ठति । सृष्टिकल्पे तु दशेन्द्रियपञ्चभूतमनोरूपषोडशकलात्मकमव्यूढगुणत्रयात्मकं प्रकाशक्रियावरणलक्षणशक्तियुक्तं सूक्ष्मतमं लिङ्गशरीरं क्षीरं नीरेणेव जीवचिता संवलितम् । तस्मिंश्च चिदचिन्मिश्रे पिण्ड एव जीवशब्द व्यवहारो यावत्परममुक्तिः । तत्रैव च न भेदप्रतिभासो विनाऽपरोक्षात् । यथा दीपो भूतांतरसंवलितोऽपि तेजोऽप्रतिघं तथा सूक्ष्मगुणत्रयात्मिका चिन्मिश्रिता चित् । तच्च न चितो विशेषतोपकारापकारक्षममिति द्वितीयेन महदहङ्कारभूतांशैः संयोज्य, भोगेन प्रारब्धं क्षपयित्वा, मोचयितुं दशेन्द्रियमनः श्रद्धाकाशवायुतेजोजलपृथिव्यन्नवीर्यतपोलोकमन्त्रनामकर्मचिदात्मकषोडशकलं स्थूलं शरीरं निर्माय, स्वयं तत्र जीवमङ्गारे वह्निमिव निवेश्य, तेन सम्पाद्यमानं पुण्यपापात्मकं वित्तं त्रिविधेभ्यः स्वपुत्रेभ्यो यथायोग्यं विभज्य दातुं कार्यकारणप्रेरकान्



ब्रह्मरुद्रेन्द्रादीन् पुष्करान्तान्देवान्देवारींश्चाधिष्ठाय जीवानधितिष्ठति । न चानुबोभूयमानज्ञानानन्दस्वरूपे प्राकृतसुखादि भोगावसर इति तत्स्वरूपं मायाऽविद्यादिपदबोध्यया स्वेच्छारूपया लिङ्गशरीररूपया च प्रकृत्याच्छादितम् । न चैतावताऽपि शरीरेन्द्रियविषया भोगदानायालं सुप्त्यादौ तददर्शनात् । अतो येन सहकृताः शरीरादयो भोगदानक्षमास्तदेव मुख्यं बन्धकम् । तच्च विचार्यमाणेऽभिमान एव भवति ।

तथा हि । स्वगतस्वामित्वविशेषाज्ञानेन शरीरेन्द्रियमनोविषय स्वामित्वाभिमानः । तत्रापि विषयापेक्षया शरीरेन्द्रियेष्विन्द्रियेषु च मनसि विशेषतः । तत्र विषयास्तावदभिमता एव सुखदुःखादिप्रदा नेतरथा । स्वाभिमतगृहकन्यादीनामलङ्कार वृद्ध्यादिना सुखादिदर्शनात् । अन्याभिमतेषु तददर्शनात् । शरीरेन्द्रियेषु स्वात्मनो विशेषोपकारितया विशेषतः स्वामित्वाभिमानः । तदैव तत्र ममताविशेषात्स्फुटं भेदाज्ञानम् । तस्माच्च तद्धर्माणां कार्श्यकठिनत्वादीनामात्मगतत्वाभिमानः । तदेताभ्यां विषयाभिमानात्मगतत्वाभिमानाभ्यामात्मनोऽत्यन्तमुपकारिणि मनसि दुःखादिः । सति च तस्मिन्नात्मनस्तत्र ममतातिशयेन स्पष्टं भेदाज्ञानेन मनोधर्मस्याप्यत्मन्यहं दुःखीत्याद्यारोपवशान्नीचोच्चत्वलक्षण विकारावात्मनो भवतः । अयमेव हि सुखदुःखादिभोगो नाम न तु साक्षात्कारमात्रम् । तथा सति भगवतोऽपि दुःखानुभवप्रसङ्गात् । अयमेव च बन्ध इति गीयते ।

तदेवंश्रीपतिर्हरिरेवाज्ञानसप्तकं निमित्तीकृत्याभिमानसप्तकमुत्पाद्य शरीरेन्द्रयविषयैः सुखदुःखे भोजयतीति सिद्धम् । तदेवं विधशरीरेन्द्रियविषयलक्षणबन्धकनिवृत्तये शरीरेन्द्रियैर्ज्ञानकर्मलक्षणं यं यं व्यापारमारभते तत्र सर्वत्रापि बन्धकोऽभिमान एव रूपान्तरेण प्रसरीसरीति । तथा हि । स्वगतकर्तृत्वविशेषाज्ञानेनाहं कर्तेति कर्तृत्वस्वातन्त्र्याभिमानः । स्वगतभोक्तृत्वविशेषाज्ञानेनाहं भोक्तेति फलभोक्तृत्वस्वातन्त्र्याभिमानः । स्वगतकारकस्वाम्यविशेषाज्ञानेन ममैव करणानीति कारकमुख्यस्वाम्यभिमानः ।

स्वगतफलस्वाम्यविशेषाज्ञानेन फलमपि ममेति क्रियाफलमुख्यस्वाम्यभिमानः । फलं चेदं यत्सर्वाभिलषितं सुखपदाभिधेयमैहिकं पारत्रिकं वेति प्राकृतसुखे दुःखतुल्ये पुरुषार्थत्वाभिमानः श्रीहरिभक्तिप्रसादावेव पुरुषार्थावित्यज्ञाननिमित्तः । तत्साधने स्रक्चन्दनवनितादौ विषये पुरुषार्थ साधनत्वापरपर्याय शोभनत्वाभिमानः श्रीहरिभक्तिप्रसादसाधनमेव शोभनमित्यज्ञाननिमित्तः ।

तदेताभ्यां पुरुषार्थतत्साधनाभिमानाभ्यां तत्रोभयत्र दुःखतत्साधनावैशेष्याज्ञानेन सुखाद्वैशेष्येण तत्र द्वेषः । तत्साधने तु तत्साधनविशिष्टत्वाज्ञानेन ततो वैशेष्येण द्वेषः । तदेवं कर्तृत्वभोक्तृत्व कारकफलस्वाम्यपुरुषार्थतत्साधनाभिमानैरान्तरैः सर्वथाऽपि परिहर्तुमशक्यम् । तादृशाभ्यां रागद्वेषाभ्यां प्रयुक्तः पूर्वापादितबन्धकनिवृत्त्या सुखं चापेक्षमाणः पूर्वस्थितैकशरीरक तिपयेन्द्रियविषयरूपबन्धकनिवृत्तये स्नानसन्ध्याध्यान व्याख्यानार्चनादि यत्क्रियते तत्सर्वमप्यसङ्ख्यात शरीरेन्द्रिय विषयापादकमेव भवति । पुनः शरीरान्तरेऽप्येवमित्यनिवृत्तिरेव । यतो बन्धकनिवृत्तये क्रियमाणं साधनजातमप्यभिमानरागद्वेषमूलकमेव । तदेवं श्रीपतिर्हरिरेवाज्ञानषट्कं निमित्तीकृत्याभिमानषट्कमुत्पाद्य पुनरज्ञानद्वयेन निमित्तेन रागद्वेषावुत्पाद्य तत्पूर्वकं जीवस्य ज्ञानकर्मलक्षणं शरीरेन्द्रियसाध्यं व्यापारं कारयित्वा तेन कर्मणा नवीनशरीरादिदानद्वारा बध्नातीति ॥

*इति श्रीविष्णुतीर्थविरचितषोडशीये बन्धकं नाम प्रथमं प्रकरणम् ॥ १ ॥*

## ॥ अथ बन्धकनिवृत्तिप्रकरणम् ॥

॥ हरिः ॐ ॥ स एव भगवान् श्रीपतिर्हरिः शरीरेन्द्रियविषयमनसां मुख्यः स्वामी तदनु क्रमेण ब्रह्माद्याः पुष्करान्ता उभयेऽपि तत्पुत्रा अहं तु तन्नियतस्वाम्य इति स्वस्मिन्स्वाम्यविशेषे ज्ञाते तदज्ञानस्य निवृत्तिः । तस्मिंश्च निवृत्ते विषयेषु स्वाम्याभिमानः शरीरेन्द्रियेषु मनसि च विशेषतः



स्वाम्याभिमानश्च निवर्तते । एवं विषयाभिमानेषु निवृत्तेषु सत्सु तन्मूलकस्य स्वशरीरेन्द्रियेषु मनसि च भेदाज्ञानस्य निवृत्तिः । तस्यां च सत्यां धर्मारोपनिवृत्तिः । ततो विषयाभिमानधर्मारोपोभयमूलकस्य मनसि दुःखादेर्निवृत्तिः। मनसि चाभिमानस्य निवृत्त्या तन्मूलकस्य स्पष्टभेदाज्ञानस्यापि निवृत्तत्वेनात्मानि दुःखित्वाद्यारोपाभावेन तन्मूलकविकाराभावेन शरीरेन्द्रियविषयमनःप्रयुक्तबन्धनिवृत्तिरेव । तदेवं श्रीपतिर्हरिरेव ज्ञानसप्तकं प्रदायाज्ञानसप्तकं न्यक्कृत्याभिमानसप्तकं पराकृत्य शरीरेन्द्रियविषयकृतमुपप्लवं परिहरतीति सिद्धम् ।

अथ पुनः श्रीपतिर्हरिरेव मुख्यकर्ता तदनु क्रमेण ब्रह्माद्याः पुष्करान्ता उभयेऽपि तत्पुत्रा अहं तु तन्नियतः कर्तेति स्वस्मिन्कर्तृत्वविशेषे ज्ञाते तदज्ञानस्य निवृत्त्या तन्मूलकस्य कर्तृत्वस्वातन्त्र्याभिमानस्य निवृत्तिः । एवं श्रीपतिर्हरिरेव क्रियाज्ञानफलस्य मुख्यतो भोक्ता तदनुक्रमेण ब्रह्माद्याः पुष्करान्ता उभयेऽपि तत्पुत्रा अहं तु तन्नियतभोक्तेति स्वस्मिन्भोक्तृत्वविशेषे ज्ञाते तदज्ञानस्य निवृत्त्या तन्मूलकस्य स्वातन्त्र्येण भोक्तृत्वाभिमानस्य निवृत्तिः । कारकस्य स्वाम्यपि श्रीपतिर्हरिरेव मुख्यः । तदनु क्रमेण ब्रह्माद्याः पुष्करान्ता उभयेऽपि तत्पुत्रा अहं तु तन्नियतस्वाम्य इति स्वस्मिन्स्वाम्यविशेषे ज्ञाते तदज्ञानस्य निवृत्त्या तन्मूलकस्य कारकस्वाम्याभिमानस्य निवृत्तिः । फलस्वाम्यपि श्रीपतिर्हरिरेव मुख्यः । तदनु क्रमेण ब्रह्माद्याः पुष्करान्ता उभयेऽपि तत्पुत्रा अहं तु तन्नियतस्वाम्य इति स्वस्विन्स्वाम्यविशेषे ज्ञाते तदज्ञानस्य निवृत्त्या तन्मूलकफलस्वाम्याभिमानस्य निवृत्तिः ।

श्रीहरिभक्तिप्रसादावेव पुरुषार्थाविति विशेषज्ञाने जाते तदज्ञानस्य निवृत्त्या तन्मूलकस्य प्राकृतसुखे पुरुषार्थत्वाभिमानस्य निवृत्तिः । श्रीहरिभक्तिप्रसादसाधनमेव शोभनमिति ज्ञाने जाते तदज्ञानस्य निवृत्त्या तन्मूलकस्य प्राकृतसुखसाधने शोभनत्वाभिमानस्य निवृत्तिः । तदेतयोः पुरुषार्थतत्साधनाभिमानयोर्निवृत्त्या तत्रोभयत्र रागनिवृत्तिः । तदेवं प्राकृतं

सुखमपि मोक्षविरोधितया दुःखमिव हेयमिति ज्ञाने जाते तादृशाज्ञाननिवृत्त्या तन्मूलकस्य सुखाद्वैशेष्येण दुःखे द्वेषस्य निवृत्तिः ।

मोक्षविरोधितया द्वेषस्त्वनुवर्तते । प्राकृतसुखमिव प्राकृतसुखसाधनमपि न पुरुषार्थसाधनमिति ज्ञाने जाते सति दुःखसाधनेऽपि सुखसाधना-विशिष्टज्ञानेन तदज्ञानस्य निवृत्त्या सुखसाधनाद्वैशेष्येण द्वेषस्यापि निवृत्तिः । मोक्षविरोधिसाधनतया द्वेषस्त्वनुवर्तते । प्राकृतसुखसाधनमिव तावुभावपि द्वेषौ न बन्धकौ । प्रत्युत भक्तिप्रसादरागाविव परमपुरुषार्थोपयोगिनावेव । तदेवं बन्धकस्वभावमपि कर्म श्रीहरिकर्तृत्वेन तद्धोक्तृत्वेन तत्स्वामिकार-कत्वेन तत्स्वामिफलकत्वेन भक्तिप्रसादातिरिक्तानुद्देश्यकत्वेन चानुसन्धीय-मानमभिमानादिमूलकत्वरूपसहकारिसमवधानाभावेन बन्धकं न भवति । प्रत्युत विपरीतसहकारिसम्पत्त्या मोचकमेव । तदेतत्सर्वं मनस्यायत्तमिति मन एव मुख्यं मोचकम् । तदेवं श्रीपतिर्हरिरेव ज्ञानषट्कं निमित्तीकृत्याभि-मानषट्कं पराकृत्य पुनर्ज्ञानद्वयेन रागद्वेषौ न्यक्कृत्य ज्ञानकर्मलक्षणे शरीरादिसाध्ये व्यापारे सहकारिसम्पत्तिं प्रापय्य तेन जीवं मोचयतीति ॥

*इति श्रीविष्णुतीर्थविरचितषोडशीये बन्धकनिवृत्तिर्नाम द्वितीयं प्रकरणम् ॥२॥*

## ॥ अथ बिम्बप्रतिबिम्बभावप्रकरणम् ॥

॥ हरिः ॐ ॥ तदेवं मनोवृत्तेः श्रीहरिप्रवणत्वमेव परमसाधनं परम-मुक्ताविति सिद्धम् । एतदेव चाधिकारिणामवस्थातारतम्येन प्रवृत्तनिवृत्त-धर्मतया श्रुतिस्मृतिषु गीयते । तथा हि । कर्मिणां यत्स्नानसन्ध्या-वन्दनब्रह्मयज्ञजपदेवतार्चनवैश्वदेवातिथिपूजनव्रतविशेषानुष्ठानयजनदानादि यच्च जिज्ञासूनां नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमो-परतितितिक्षामनःसमाधानभक्त्यादि यदपि ज्ञानिनामेतदुभयं लोकसङ्ग्रहार्थं यच्चाध्यात्मविदामनिरुद्धादिरूपध्यानत्रिविधपूजाशरणागतिसर्वसमर्पणादि तत्सर्वं साधनजातमप्येतदेव । यथा खलु रोगिणो रुच्युत्पादनाय



तण्डुलादिप्रकृतिकं द्रव्यमेवानेकधा व्यपदिशन्त्युत्पादयन्ति च तत्र रुचिम् । तद्वदेवैतदेवोक्तविधयाऽनेकधा प्रतिपादयन्ति भवरोगिणां रुचिमुत्पादयन्ति पुराणवचनानि । एतदेव चाभिव्यक्तसाक्ष्युपोद्बलितं विरोधिप्रमाणसहस्रेणापि न चाल्यते । एतदेव हि साधनसम्पत्तेः पराकाष्ठा । एतदेव च वृत्तिवैकल्ये साक्षिण्येव वर्तमानं साध्यरूपमपि भूत्वा विजयते । यथा चैतत्तथैवायं श्रीहरिरपि कर्मिणां देवर्षिपित्रादितया जिज्ञासूनां शरीरेन्द्रियदेवतादिभावेन ज्ञानिनां रामकृष्णादित्वेनाध्यात्मविदामनिरुद्धादिपञ्चरूपतयाऽस्यामेव हृदयगुहायां सर्वव्यवहारनिर्वाहकतया पूज्यतया च गीयते शास्त्रेषु । तदत्र लेशतः प्रदर्शयिष्यामः ।

तथा हि । जीवस्तावल्लिङ्गशरीरे नीरसंवलितक्षीरवद्वर्तत इत्युक्तम् । तस्मिंश्च जीवे विष्णुर्हरिनामकेन बिम्बरूपेण मुखे मुखमित्यनेन क्रमेण वर्तते । तस्योपाधिः प्रतिबिम्बश्च जीव एव । स च प्रतिबिम्बस्वाभाव्या-त्स्वात्मानं बिम्बाभिमुखेनैव पश्यति । पश्यन्नपि स्वस्यैवोपाधितया स्वस्मिन्नेव पश्यति । बिम्बोऽप्ययं न तु साक्षात्किन्तु पुष्करो नाम सर्वावरो देवः । स च साक्षाद्बिम्बो मुखे मुखमित्यादिक्रमेणास्ते । तस्मिंश्च देवे शनैश्चरस्तेनैव क्रमेण बिम्बो भूत्वा वर्तते । तस्मिंश्च शनैश्चरे चोषास्तस्यां चोषसि बुधस्तस्मिंश्च बुधे स्वाहा तस्यां च पर्जन्यनामा देवस्तस्मिन्पर्जन्ये च विघ्नेशाश्विकुबेरास्तस्मिंश्च मित्रनिर्ऋती तयोश्चाग्निस्तत्र वरुणस्तस्मिं-श्चन्द्रसूर्यधर्मशतरूपास्तेषु प्रवहस्तत्रानिरुद्धस्वायम्भुवबृहस्पतिदक्षरतिशच्य-स्तत्राहङ्कारिकप्राणस्तत्रेन्द्रकामौ तयोरुमादित्रयं तत्र रुद्रादित्रयं तत्र सरस्वतीभारत्यौ तत्र ब्रह्मवायू तत्र महालक्ष्मीस्तत्र हरिरित्येवम्परम्परया ।

यद्यपि श्रीहरिर्महालक्ष्मीमधिष्ठायानादितो जीवबिम्बतयाऽऽस्ते । तथैव तेषां साधनसम्पत्तिमापाद्य मोचयितुं समर्थस्तथाऽपि पुष्करादिब्रह्मान्तेषु देवेषु परमानुग्रहेणान्यगतमपि भागवतधर्मज्ञानफलं मुक्तावानन्दातिशय-लक्षणं दातुं तैः सप्तान्नविद्योपासनादिसाधनानि सुचिरं कालं कारयित्वा

तत्फलं परमपुरुषप्रवेशादिमहिमानं दत्वा प्रायोऽस्मिन्नेव कल्पे मुच्यमानांस्तानस्मिन्नेव कल्पे मुच्यमानेषु जीवेषु सृष्ट्यादौ प्रवेशयित्वा स्वयं लक्ष्मीद्वारा तेषु स्थित्वोक्तद्वारा जीवैः साधनानि कारयित्वा तत्फलं शरीरेन्द्रियादिस्वातन्त्र्याधिक्यतारतम्येन कर्तारं जीवमारभ्यब्रह्मपर्यन्तमुत्तरोत्तरमधिकं दत्वा विजयते । तदेवं लक्ष्म्यादिभिः पुष्करान्तैः क्षीरं नीरेणेव संवलितोऽपि तेषां बाह्यान्तरभावमापाद्य स्वयं सर्वान्तरः सन्नेव मुखे मुखमित्यादिक्रमेण जीवं व्याप्य तिष्ठतीति । अयमेव हि द्रव्यबिम्बभाव इत्युच्यते ।

एवं पञ्चाशद्वर्णात्मकः षड्जाद्यनेकविधस्वरात्मकोऽतिमधुरः शब्दः शीतोष्णादिरूपः सुखदुःखदः स्पर्शः शुक्लाद्यनेकविधं रूपं मधुराद्यनेकविधः सुरसः सुरभिरेवानेकविधो गन्धो ज्ञानानन्देच्छाकृतिवीर्यौदार्यप्रागल्भ्यप्रमुखास्तथा विरागशमदमादयश्च ये जीवस्वरूपानुगुणास्तेष्वपि तादृशा एव बिम्बगुणा उक्तानेक देवतागुणद्वारा बिम्बतया वर्तन्ते । स एष एव गुणबिम्ब प्रतिबिम्बभाव इत्युच्यते । एवमेव गमनागमनग्रहणोद्धरणानयनाद्यनेक विधक्रियासु स्वरूपभूतासु तादृशा एवोक्तानेकदेवताक्रियाद्वारा बिम्बक्रिया विजयते सैषा एव क्रिया बिम्बप्रतिबिम्बभावतया गीयते ॥

*इति श्रीविष्णुतीर्थविरचितषोडशीये बिम्बप्रतिबिम्बभावो नाम*
*तृतीयं प्रकरणम् ॥ ३ ॥*

## ॥ अथ बिम्बसंस्थापनं प्रकरणम् ॥

॥ हरिः ॐ ॥ जीवे विष्णुर्हरिनामकेन बिम्बरूपेण मुखे मुखमित्यादिक्रमेण वर्तत इत्युक्तम् । तत्र हरेर्मुखादिकं तु पृथक् पृथगेकैकरूपात्मकमेव । अनेकरूपसमाहारात्मकमपि तत्तत्पाणिपादाद्यवयवोपेतं रूपान्तरमिव दृश्यते नवनारीकुञ्जरवत् । तथा हि । शिरो नारायणः । ललाटं प्रद्युम्नोद्भूतकेशवः । भ्रूमध्य भ्रूयुगलमपि नारायणः । दक्षिणचक्षुः प्रद्युम्नः । वामचक्षुरनिरुद्धः ।



तद्गोलकद्वयं कपिलः । चक्षुर्द्वये शुक्लं रामः । कृष्णं कृष्णः । कनीनिका कपिलः । श्रोत्रेन्द्रियं वासुदेवः । तद्गोलकद्वयमनिरुद्धः । कपोलद्वयं सङ्कर्षणः। घ्राणेन्द्रियं प्रद्युम्नः । तद्गोलकं नृसिंहः । उत्तरोष्ठो वासुदेवः । अधरोष्ठः सङ्कर्षणः । ऊर्ध्वाधरदन्तपङ्क्तिद्वयं प्रद्युम्नः । रसनेन्द्रियं सङ्कर्षणः। तद्गोलकं नृसिंहः । उत्तरोष्ठो वासुदेवः । अधरोष्ठः सङ्कर्षणः । ऊर्ध्वाधरदन्तपङ्क्तिद्वयं प्रद्युम्नः । प्रपदद्वयं वासुदेवजोऽनिरुद्धः । अङ्घ्रिद्वयं सङ्कर्षणः । तत्रस्थं पादनामकमिन्द्रियमपि सङ्कर्षणः । ध्वजवज्राङ्कुशपद्माख्यपादलाञ्छनचतुष्टयं वासुदेवादिमूर्तिचतुष्टयम् ।

पादद्वयेऽङ्गुलिपञ्चकद्वयं नारायणादिरूपपञ्चकद्वयम् । तथा नखपञ्चकद्वयमपि नारायणादिरूपपञ्चकद्वयम् । त्वगिन्द्रियं सङ्कर्षणः । चर्माख्यं तद्गोलकं नारायणः । मनोऽनिरुद्धः । तद्गोलकं हृदयं प्रद्युम्नोद्भूतो माधवः । मनःप्रभेदभूता मनआद्याः पञ्च क्रमादनिरुद्धादिपञ्चमूर्तयः । केशमूलं सङ्कर्षणः । शिरः कपालोपरिभागो वासुदेवः । रोम नारायणः । त्वक् प्रद्युम्नः । मांसं वराहः । रुधिरं नारायणः । मेदोऽनिरुद्धः । षष्ठ्युत्तरशतत्रयसङ्ख्याकामज्जानस्तावत्सङ्ख्याकाः सङ्कर्षणमूर्तयः । षष्ठ्युत्तरशतसङ्ख्याकान्यस्थीनि तावत्सङ्ख्याकान्यनिरुद्धरूपाणि । प्राणो नारायणः । अपानो वासुदेवः । व्यानः सङ्कर्षणः । उदानः प्रद्युम्नः । समानोऽनिरुद्धः । अन्नमयकोशोऽनिरुद्धः । प्राणमयः प्रद्युम्नः । मनोमयः सङ्कर्षणः । विज्ञानमयो वासुदेवः । आनन्दमयो नारायणः । अव्यक्ततत्त्वं नारायणः । गुणत्रयं विश्वादिमूर्तित्रयम् । महत्तत्त्वं वासुदेवः । अहङ्कारतत्त्वं सङ्कर्षणः । विज्ञानतत्त्वं प्रद्युम्नः । मनस्तत्त्वमनिरुद्धः । आकाशो नारायणः । वायुर्वासुदेवः । तेजः सङ्कर्षणः । आपः प्रद्युम्नः ।

पृथिव्यनिरुद्धः । तथा शब्दो नारायणः । स्पर्शो वासुदेवः । रूपं सङ्कर्षणः । रसः प्रद्युम्नः । गन्धोऽनिरुद्धः । पृष्ठभागे वज्रिकानामकनाडी हरिद्वर्णः प्रद्युम्नः । वामे आर्यानामनाडी नीलवर्णोऽनिरुद्धः । अग्रे

प्रकाशिनीनामनाडी शुक्लो वासुदेवः । दक्षिणे वैद्युतानामनाडी पिङ्गलः सङ्कर्षणः । मध्ये बह्मनाडी रक्तवर्णो नारायणः । सुषुम्नायाश्चतुर्दिक्षु स्थिताः शतं नाड्यो नारायणादिशतरूपाणि । शतनाडीष्वपि चतस्रः प्रधान-नाड्यश्चतुर्दिक्षु सन्ति । तत्र पश्चिमे वज्रिका प्रद्युम्नः । वामे इडाऽनिरुद्धः । अग्रे धारिणी वासुदेवः । दक्षिणे पिङ्गला सङ्कर्षण इति । तथा द्वासप्ततिसहस्रनाड्यो बृहतीसहस्रवर्णवाच्यानि द्वासप्ततिसहस्ररूपाणि । तत्रापि दक्षिणभागस्थषट्त्रिंशत्सहस्रनाड्यो बृहतीसहस्रस्वराक्षरवाच्यानि षट्त्रिंशत्सहस्रपुरुषरूपाणि । वामभागस्थषट्त्रिंशत्सहस्रनाड्यस्तु बृहती-सहस्रव्यञ्जनाक्षरवाच्यानि षट्त्रिंशत्सहस्ररूपाणीति विवेकः ।

एवं द्वासप्ततिसहस्रनाडीप्रभेदभूतास्तदवान्तरनाड्यो द्वासप्तति-सहस्रोद्भूतानि रूपाणि । मस्तके किरीटाद्याभरणमनिरुद्धोद्भूतो मत्स्यः । कर्णयोः कुण्डलादिसमस्ताभरणमनिरूद्धोद्भूतः कूर्मः । कण्ठकौस्तुभाद्या-भरणमनिरुद्धोद्भूतो वराहः । उरसि प्रथमत्रिचाशीतिप्रतिपाद्यः शुक्लवर्णो वासुदेवः । स्वाशीतिरूपत्रयैस्त्रिगुणितमुक्तामाला । द्वितीयत्रिचाशीति-प्रतिपाद्यः पिङ्गलः सङ्कर्षणः स्वाशीतिरूपत्रयैस्त्रिगुणिता वैडूर्यमाला । तृतीयत्रिचाशीतिप्रतिपाद्यः पीतवर्णः प्रद्युम्नः स्वाशीतिरूपत्रयैस्त्रिगुणि-तकाश्चनमाला । त्रिचाशीतित्रयाद्यभागप्रतिपाद्यो रक्तवर्णोऽनिरुद्धनारायणः । अशीत्युत्तररूपैर्द्विगुणितरत्नमाला । अन्त्यभागप्रतिपाद्यो नीलवर्णोऽ-निरुद्धोऽशीत्युत्तरशतस्वरूपैर्द्विगुणितेन्द्रनीलमाला नृसिंहोद्भूतो नृसिंहः । बाहुषु केयूरपूर्वाभरणं नृसिंहोद्भूतो वामनः । नितम्बे काञ्चीमुखाभरणं नृसिंहोद्भूतो भार्गवः । पादयोर्मञ्जरीपूर्वाभरणं सङ्कर्षणोद्भूतो रामः । करेषु कङ्कणाभरणं सङ्कर्षणोद्भूतः कृष्णः । कराङ्गुलीष्वङ्गुलीयकपूर्वाभरणं सङ्कर्षणोद्भूतः कल्किः । किरीटादिसर्वाभरणखचितनवरत्नान्यनिरुद्धादि-मूर्तित्रयोद्भूतमत्स्यादि नवरूपाणि ।



अधमाधिकार्युपास्यात्मत्वाख्योगुणोऽनिरुद्धः । मनुष्योत्तमोपास्या आनन्दो ज्ञानं सदात्मेति चत्वारो गुणा वासुदेवादिचतुर्मूर्तयः । एवमिच्छा-कृतिवीर्योदार्यप्रागल्भ्यप्रमुखास्तथा सर्जनपालनसंहरणाख्याः क्रियाः क्रमाद्विश्वतैजसप्राज्ञमूर्तयः । एवं सृष्ट्याद्यर्था अनन्ताः क्रिया विश्वाद्युद्भूता अनन्ता मूर्तयः । एवञ्चोक्तरीत्यैकैकावयवजातं पृथक् पृथगैकैकरूपात्मकम् । तत्राप्यवयवजातं रूपान्तरात्मकम् । पुनस्तदपि तथेति भगवतो हरेरेकैक-रूपमनन्तानन्तरूपान्तरात्मकम् । एवं गुणानामपि प्रत्येकमेकैक-रूपात्मकत्वादेकैकगुणरूपात्मकत्वादेकैकगुणोऽनेकगुणात्मकः । तत्राप्येकैकोऽनेकगुणात्मक इत्येकैकगुणस्यानन्तानन्तगुणात्मकत्वम् । एवमेव क्रियास्वप्येकैकस्याः क्रियाया अनन्तानन्तक्रियात्मकत्वमिति ॥

*इति श्रीविष्णुतीर्थविरचितषोडशीये बिम्बसंस्थापनं नाम चतुर्थप्रकरणम् ॥ ४ ॥*

## ॥ अथ स्थूलशरीरसृष्टिप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं बिम्बरूपी हरिरन्तानन्तजीवेष्वनादिकालमारभ्य मुखे मुखमित्यादिक्रमेण रमावयवगुणक्रियामात्रं द्वारीकृत्य स्वावयवैर्जीवा-वयवान्स्वगुणैर्जीवगुणान्स्वक्रियाभिर्जीवक्रियाश्च लीलयैव निश्छिद्रतया व्याप्य वर्तमानः स्वालिङ्गिताशेषजीवगणस्यानादिकालं विद्यमानमपि ज्ञानानन्दादि निजस्वरूपं मायाऽविद्यादिपदबोद्धचया स्वेच्छारूपया लिङ्गशरीररूपया च प्रकृत्याऽऽच्छादितत्वान्नानुभवपदवीमवलम्बते । तत्र जीवानां च विशेषोप-कारापकारौ कर्तुमक्षममतिसूक्ष्मं लिङ्गशरीरं तादृशैरेव महदहङ्कारभूतांशैः पुनः पुनः संयोज्य क्रमादुपचितं कृत्वा पुनः स्थूलरूपेण महदादि-चतुर्विंशतितत्त्वसर्जनपूर्वकं तैस्तत्त्वैः स्थूलस्थूलतरादिक्रमेण सुरनर-तिर्यगादिनानाविधशरीरजातं निर्माय तदनुप्रविश्य तत्सत्तादि प्रदाय तत्र जीवमङ्गारे वन्हिमिव निवेश्य तेन सम्पाद्यमानं पुण्यपापात्मकं वित्तं त्रिविधेभ्यः स्वपुत्रेभ्यो यथायोग्यं विभज्य दातुं कार्यकारणप्रेरकान्

ब्रह्मादीन्पुष्करान्तान्देवान्देवारींश्च द्वारीकृत्य जीवानधिष्ठाय सुचिरकालं तैः साधनानि कारयित्वा क्रमात्स्वात्मानं दर्शयित्वा प्रारब्धातिरिक्तं किञ्चिद्विनाश्य किञ्चिद्विश्लिष्य भोगेन प्रारब्धं क्षपयित्वा निजानुभवनिरोधकान्मायाऽविद्यादिपदबोध्यादुक्तरूपाद्बन्धादुन्मुच्यान्यथारूपं हित्वा स्वरूपेणावस्थितानां निराबाधं निजानन्दज्ञानाद्यनुभवं सार्वकालीनं प्रदाय तैः सह वैकुण्ठादिस्थानविशेषेषु विहारं कर्तुमिच्छन्द्वितीयेन रूपेण स्थूलशरीरं प्रादादित्युक्तम् । **तत्रायं स्थूलशरीरसृष्टिक्रमः ।**

ब्रह्ममानेन शतवर्षपर्यन्तं लयकालः । स चायं कालो भगवतो नारायणस्य निमेषवदुपचर्यते । तस्मिन्काले रमोदकरूपेण व्याप्ता भवति । भूदेवी वटपत्रं भवति । दुर्गा तमोरूपेण व्याप्ता भवति । तदा तत्त्वनियामकरूपैरवताररूपैश्चैकीभूयातीतानागतवर्तमानानन्तकल्पीयांस्त्रिविधाञ्जीवराशीनुदरे कृत्वा लक्ष्म्यालिङ्गितः स भगवान्बालरूपेण वैकुण्ठस्य श्रीभागोपरि वटपत्रे ब्रह्ममानेन सार्धसप्ताशीतिवर्षपर्यन्तं योगानिद्रामुपजगाम । तदानीं जगत्सर्जनादिव्यापारशून्यत्वाच्छून्यपदाभिधेयतां च गतस्तेनैव मानेन सार्धद्वादशवर्षेष्ववशिष्टेषु योगनिद्रां समाप्यान्तिकेऽम्भ्रणीं ददर्श । ततस्तया साकं रमणं करिष्यामीतीच्छा बभूव । तदा रमा स्तुतिं चकार । ततस्तया प्रसन्नः स्वोदरस्थान्ब्रह्मादिकान्देवान्कल्यादिकान्दैत्यान्मनुजांश्च ददर्श । तत्र प्राप्तलिङ्गभङ्गा ध्यानं गता भवन्ति । भविष्यल्लिङ्गभङ्गास्तु सुषुप्तिसंस्थाः । एतादृशां स्त्रिविधजीवान्दृष्ट्वेत्थमचिन्तयत् । ब्रह्मादिकानशेषजीवान्स्रक्ष्ये । तदर्थं प्रकृत्यादितत्त्वानि च । तेन च त्रिविधानां जीवानां सुखदुःखमध्यमरूपस्वभावसम्प्राप्तिः । मम तु तत्तत्सत्ताप्रतीतिप्रवृत्त्यादि- प्रदानाय तत्र तत्राभिव्यज्यमानानन्तरूपैर्विहारो भवति । लक्ष्म्या अपि नित्यावियोगितया तत्र तत्र प्रादुर्भावो बहुधा । तेन च तस्यां ममाधिका प्रीतिरिति । अथ परमात्मा तमोरूपां दुर्गां पिबति । तदैवोदकं लक्ष्म्या एकीभूतं भवति । वटपत्रं भूदेव्या एकाकारं भवति । ततः श्रीनारायणः क्रमाद्वासुदेवादिचतुर्व्यूहात्मना प्रादुर्बभूव । इयमेवात्मसृष्टिः ।



तथा क्रमात्तदा तदा सृष्टये पालनाय संहाराय ज्ञानोपदेशाय दैत्यभयपरिहाराय स्वकृतसेतुपरिपालनाय च भविष्याणि मत्स्यादिदशरूपाणि केशवादिचतुर्विंशतिरूपाणि नारायणादिशतरूपाणि विश्वादिसहस्ररूपाणि परादिबहुरूपाण्यजाद्यनन्तरूपाणि चैत्याद्यनन्तानन्तरूपाणि बहुशो विभज्य नियमितवान् । देहेन्द्रियान्तःकरणादेरीषदपि विकाराभावेन केवलं लीलयैव जगदुपकाराय दीपाद्दीपान्तरवन्मूलरूपाद्बहिर्निःसारणमात्ररूपत्वाच्छुद्धसृष्टिरिति चोच्यते । तदनु रमाऽपि भगवदिच्छया सिसृक्षत्वरूपविशेषं प्राप्ता सती मायादिरूपेण प्रादुर्बभूव । इयमेव लक्ष्मीसृष्टिः । भगवदधीनविशेषावाप्तिरूपत्वात्पराधीन विशेषावाप्तिः सृष्टिरिति चोच्यते ।

ततो भगवान्नारायणो रमारूपैर्मुक्तब्रह्मादिभिश्च नानारूपेण क्रीडां विधायाथ जीवानां देहसृष्टये प्रकृतिं बोधयामास । प्रकृतिस्तावत्त्रिविधा । अव्यक्ता व्यक्ता व्यक्ताव्यक्ता चेति । तत्राद्या सर्गहीना कार्योत्पत्तावपादानरूपा । द्वितीया सर्जनोन्मुखत्वं प्राप्ता कार्यं प्रत्युपादानरूपा । तृतीया कार्यरूपा । तत्रापादानभूताया मूलप्रकृतेरुद्भूतानां महदादिकार्यरूप तृतीयप्रकृत्युपादानभूतानां व्यक्ताव्यक्ताख्यद्वितीयप्रकृतिरूपाणां सत्वादिगुणानामियं स्थितिः । तथा हि । सृष्टौ शुद्धसत्त्वैरेव सत्त्वगुणो भवति । तन्मुक्तानामुपभोग्यम् । एकस्तमोभागस्तच्छतगुणाधिको रजोभागः शतगुणाधिकः सत्त्वभाग एतैर्मिलित्वा रजोगुणो भवति । एको रजोभागस्तद्दशगुणाधिकस्तमोभागस्तमसो दशगुणाधिकः सत्त्वभाग एतैर्मिलित्वा तमोगुणो भवति । प्रलये च सत्त्वगुणः स्वमूलगुणं प्रविशति । तमोगुणोऽपि स्वमूलगुणं प्रविशति । रजोगुणस्तु द्वादशधा भूत्वा तत्र दशभागैः सत्त्वगुणं प्रविशति । एकेन भागेन तमोगुणं प्रविशति । अवशिष्टेनैकेन भागेन तु स्वमूलगुणं प्रविशति ।

एवं प्रवेश एव गुणानां साम्यावस्थेत्युच्यते । त्रयाणामपि रजसा मिश्रितत्वसाम्यात् । ततो नद्यः समुद्र इव गुणत्रयं मूलप्रकृतौ प्रविशति ।

पुनः सृष्टिकाले सत्त्वगुणः स्वप्रविष्टान्रजोभागांस्तत्रैव विहाय स्वयं शुद्ध एव बहिरायाति। रजोगुणस्तु स्वेन सह प्रविष्ट एको भागस्तत्रैव स्थिता दशभागा इत्येकादशरजोभागैः सह बहिरायाति। इयमेव गुणानां सृष्टिः।

भगवान्नारायणोऽपि गुणत्रयनियामकतया विश्वादिरूपत्रयेण तदा बहिरायाति। तमनु रमाऽपि श्रीभूदुर्गाख्यरूपत्रयेण भवति। तत्र सत्त्वमतिश्वेतं रजः शबलं तमोऽतिश्यामम्। अथ रजसा सहागतैर्दशरजोभागैस्तमसा सहागताभ्यां रजस्तमोभागाभ्यां मिलित्वा गुणवैषम्यनामकं महत्तत्त्वमजायत। तदभिमानी चतुर्मुखो वायुः प्रकृतिः श्रद्धा च। तदुभयसत्तादिप्रदत्वेन भगवानपि वासुदेवात्मनाऽवततार। महत्तत्त्वादहङ्कारतत्त्वं तदभिमानी रुद्रः शेषो गरुडश्च। तदुभयनियमनाय भगवान् सङ्कर्षणात्मनाऽवततार। अहङ्कारतत्त्वे एकस्तमोभागस्तद्दशगुणाधिको रजोभागस्तद्दशगुणाधिकः सत्त्वभाग इति भागत्रयमस्ति। तत्राहङ्कारतत्त्वान्तर्गतेन तमोभागेन बुद्धितत्त्वं भवति। तदभिमानिन्युमा वारुणी सौपर्णी च। भगवानपि तदुभयनियमनाय प्रद्युम्नात्मनाऽवततार। बुद्धितत्त्वान्तर्गतेन तमोभागेन मनस्तत्त्वमिन्द्रियरूपा बुद्धिश्च भवति। इन्द्राद्या मनोभिमानिनो देवाश्च तदभिमानिनः। तथा भगवानपि तदुभयनियमनायानिरुद्धात्मनाऽवततार। मनस्तत्त्वेंऽशत्रयमस्ति। तत्र प्रचुरसत्त्वांशाद्वैकारिकनामकदेवदेहानामिन्द्रियरूपमनसश्च सर्गः।

तत्र श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि। वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि। प्रचुरतमोंऽशात्तु शब्दतन्मात्राद्वाराऽऽकाश उत्पन्नः। तथा तद्देवो विनायकस्तदुभयनियामको नारायणश्च। आकाशात्स्पर्शस्तन्मात्राद्वारा वायुस्तद्देवो मरीचिस्तन्नियामको वासुदेवश्च। वायो रूपतन्मात्राद्वारा तेजस्तद्देवः पावकाख्योऽग्निस्तन्नियामकः सङ्कर्षणश्च। तेजसो रसस्तन्मात्राद्वाराऽऽपस्तद्देवो वरुणस्तन्नियामकः प्रद्युम्नः। अद्भ्यो गन्धस्तन्मात्राद्वारा पृथिवी तद्देवी धरा तन्नियामकोऽनिरुद्धश्च। एतेषां



मूलभूतोऽहङ्कारो वैकारिकतैजसतामसभेदेन त्रिरूपवानभिधीयते। अत्राव्यक्तादीनां तत्त्वानां नित्यत्वेऽपि सत्त्वादिगुणैरुपचयाभि प्रायेणैवोत्पत्त्यादि व्यवहारः। तत्रैकस्तमोभागस्तच्छतगुणहीनो रजोभागस्तत्सहस्रगुणहीनः सत्त्वभाग इति भागत्रयेण पञ्चभूतान्युपचितानि भवन्ति। तत्र पञ्चभूतेभ्यः प्रचुरसत्त्वांऽशेन तमोमोहमहामोहतामिस्रान्धन्तामिस्रभेदेन पञ्चपर्वाविद्यासर्जनद्वारा दैत्यरक्षःपिशाचादिदेहानां सर्गः। रजस्तमोंऽशाभ्यां मिलित्वा स्थावरादिदेहानां सर्गः।

एवं श्रीनारायणो महदादितत्त्वानि तदभिमानिनो ब्रह्मादिदेवांस्तद्देहांस्तदन्यदेहांश्च सूक्ष्मतमरूपेण कल्पयित्वा पुनः प्रद्युम्नरूपेण सूक्ष्मरूपेण कल्पयित्वा ततस्तुरीयेणानिरुद्धनाम्ना रूपेण स्थूलरूपेण सृष्ट्वाऽथ लब्धस्थूलदेहांस्तत्त्वदेवान्ब्रह्माण्डनिर्माणाय नियोजयामास। ततो ब्रह्माण्डनिर्माणे नियुक्तैरपि तैस्तत्त्वदेवैः स्वतः स्रष्टुमशक्तैः संस्तुतस्तेषु प्रसन्नो वासुदेवान्मायायां पुरुषनाम्ना रूपेणावतीर्य महदादितत्त्वेषु तदभिमानिषु च प्रविश्य तेषां सर्जनशक्तिमुद्बोध्य तैर्ब्रह्माण्डं निर्माय तदन्तः सर्वसत्त्वसमेतैर्देवैः सह प्रविश्याण्डोदके शेषपर्यङ्के शयानः सन् स्वोदराच्चतुर्दशभुवनसन्निवेशरूपं पद्मं निर्माय तत्र पुनश्चतुर्मुखं निर्माय ब्रह्माण्डान्तराभिव्यक्तैस्तत्त्वदेवैश्च द्विसप्तलोकान्निर्माय तत्रेन्द्रादिनामानि देहाख्यानि रूपाणि च निर्मातुमनिरुद्धनाम्ना रूपेण तेजोजलपृथिव्याख्यं भूतत्रयं तदभिमानिनीः श्रीप्राणरुद्राख्या उत्तमा इन्द्राद्या मध्यमा अग्निवरुणपृथिव्याख्या अधमदेवताश्चानुप्रविश्यतासां त्रिवृतं त्रिवृतमेकैकामकरोत्। तथा तेभ्यस्तत्तन्नामानि रूपाणि चाकरोत्।

तथा हि। तत्रादौ भगवाननिरुद्धस्तेजोजलपृथिव्याख्यं भूतत्रयं तदभिमानिनः श्रीप्राणरुद्रांश्चानुप्रविश्य तेषां कार्योन्मुखत्वादिशक्तिमुद्बुध्य क्रमाद्भूतेभ्यस्त्रीञ्जडांशान्देवताभ्यस्त्रींश्चेतनांशांश्चोद्धृत्याशषट्कं मिश्रीकृत्यैकैकं तेजआख्यमबाख्यं पृथिव्याख्यं चकार। तेभ्य इन्द्रादिनामानि तत्तच्छरीरादि-

रूपाणि चकार पुनस्तन्मिश्रीभूतं चकार । भूतत्रयं तदुत्तमाभिमानिनो लक्ष्म्यादींस्तन्मध्यमाभिमानिन इन्द्रादींश्चानुप्रविश्य तेषां कार्योन्मुखत्वादि शक्तिमुद्बुध्य पूर्ववच्चेतानांशाज्ञडांशांश्चोद्धृत्यांशनवकं मिश्रीकृत्यैकैकं तेज आख्यमबाख्यं पृथिव्याख्यं चकार । तेभ्योऽग्निवरुणपृथिव्यादीनां नामानि रूपाणि चक्रे । पुनस्तदपि भूतत्रयं तदुत्तमाभिमानिनो मध्यमाभिमानिनोऽग्न्याद्यधमाभिमानिनश्चानुप्रविश्य कार्योन्मुखत्वादिशक्तिमुद्बोध्य चेतनांशाज्ञडांशांश्चोद्धृत्यांशद्वादशकं मिश्रीकृत्यैकैकं तेजआख्यमबाख्यं पृथिव्याख्यं चकार । तेभ्यो मानुषादिनामरूपाणि चकारेति । नात्र मानुषादि नामरूपाणीन्द्रादिनामरूपाणीव न साक्षात्किन्तु पृथिव्या ओषधयो जायन्ते ओषधीभ्योऽन्नं तदैव भगवानपि शरीरादिसंयोगप्रदं कर्म यस्योद्बुद्धं तादृशं जीवमादाय सङ्कर्षणारव्येन रूपान्तरेणान्नस्थो भवति ।

कर्मोद्बोधो नाम कर्मस्थितस्य कर्मनाम्नो हरेः फलदानेच्छयैवेति रहस्यम् । एवमुत्तरत्रापि । यस्य च पुत्रादिप्रपञ्चसम्बन्धप्रदं कर्मोद्बुद्धं तेन प्रद्युम्नाधिष्ठितेन पितृपुरुषेण तदन्नमुपभुज्यते । अन्नस्थो भगवान्सङ्कर्षणोऽपि जीवमादायान्नद्वारा तं पुरुषं प्रविशति । तदन्नं तेजोजलपृथिव्यात्मकं त्रिविधमपि तत्पुरुषशरीरं प्राप्य त्रेधा त्रेधा भवति । तत्र पृथिवीभागे स्थितो रुद्रः स्वनियामकेनानिरुद्धेनोद्बुद्धः स्वाभिमन्यमानं पृथिवीभागं त्रेधा विभज्य तत्र यः स्थूलो भागस्तं पुरीषं विधाय मध्यमेन मांसमणिम्नोपचयं मनसो विधाय स्वयमपि त्रिरूपो भूत्वा तत्तन्नियमनाय तत्र तत्र प्रविशति । एवमब्भागस्थितो मुख्यप्राणोऽप्यनिरुद्धेनोद्बोधितः स्वाभिमन्यमानमब्भूतं त्रेधा विभज्य तत्र स्थविष्ठेन भागेन मूत्रं मध्यमेन लोहितमणिम्नोपचयं प्राणस्य विधाय स्वयमपि त्रिरूपस्तत्र प्रविशति । एवं तेजोभागस्थिता श्रीरप्यनिरुद्धोद्बोधिता स्वाभिमन्यमानं तेजोभागं त्रिधा विभज्य तत्र स्थविष्ठेनास्थीनि मध्यमेन मज्जामणिम्नोपचयं वाचो विधाय स्वयं त्रिरूपा सती तत्र तत्र प्रविशति । तत्र मज्जायां मुख्यप्राणस्य विशेषतः सन्निधानम् । तत एव मज्जैव रेतो भवति न मांसादीनि ।



एवं क्रमेण पितृभुक्तान्नस्य रेतस्त्वेव प्राप्तेऽन्नस्थो भगवान्सङ्कर्षणो जीवमादाय रेतःस्थो भवति । तद्रेतसि स्थितं सङ्कर्षणाख्यं स्वरूपं किञ्चित्कालं पुरुषस्थो भगवान्प्रद्युम्नो गर्भवद्बिभर्ति । तदा भगवतो रूपान्तरसम्बन्धवशेन पुरुषस्य सर्वाङ्गेषु तेजोविशेषो दृश्यते । तदैव भगवान्वासुदेवः स्त्रीयोनिं गर्भधारणानुकूलशक्तिमतीं करोति । ततः पुरुषस्थो भगवान्प्रद्युम्नो रेतःस्थं सजीवं सङ्कर्षणाख्यं स्वरूपं रेतसा सह स्त्रियां सिञ्चति । तदेतद्भगवतो हरेः प्रथमं जन्मेत्युच्यते । पूर्वस्मात्स्थानात्स्थानान्तरं प्रति गतत्वात् । अथ मातृस्थो भगवाननिरुद्धो रेतसा सहागतं सजीवं सङ्कर्षणाख्यं स्वरूपं बिभर्ति । अनिरुद्धस्य गर्भाश्रयादेव हि मातुरुदरे प्रविष्टानामन्नादीनां जीर्यमाणत्वेऽपि पितृशरीरान्मातृशरीरमनुप्रविष्टानां गर्भीभवतां रेतआदिपदार्थानामेवाविनाशेनावस्थानं प्रत्युताभिवृद्धिश्च दृश्यते । तदारभ्याप्रसवं मातुः सर्वाङ्गेषु तेजोबाहुल्यं दृश्यते । तथा तद्रेतो निरन्तरमेधमानमपि तां न हिनस्ति । किन्तु तस्या अङ्गान्तरवदेवानुकूल्यं भवति । ततो रेतःस्थो भगवान्सङ्कर्षणो मातृस्थस्वरूपानुमत्या क्रमाज्जीवस्थशरीरनिर्माणं करोति ।

तथा हि । पितृशरीरात्कालविशेषे योनिद्वारा मातृशरीरं प्रविश्य यच्छुक्रं तदेवानिरुद्धप्रेरणया समागतेन शोणितेन संयुज्य तदुदरे कोष्ठविशेषं प्रविश्य सङ्कर्षणाधिष्ठितत्वमहिम्नैकरात्रेण कलिलं भवति । ततस्त्रिरात्रेण बुद्बुदं दशाहेन त्वामपिष्टपिण्डवदीषत्काठिण्योपेतं पक्षेण तु मांसखण्डवत्सम्यग्घनीभूतपिण्डवद्वा । अत्र गर्भस्थानां जीवानां मत्युत्तमत्वे भगवान्स्वेच्छया तदिच्छादिकमुत्पाद्य तन्निमित्तीकृत्यावयवजातं निर्मिमाति । अधमत्वे तु पुरुषदेहे सम्भाव्यमानसर्वव्यापारानुकूलं यावदवयवानि निर्मातुमुत्तरत्र स्वप्रेरणानुसारेण जीवानां भविष्यदिच्छानुसारेण स्वयमेव तथा तथेच्छित्वा तदवयवजातनिर्माणं करोति । तत्र घनीभूते स्थूलपिण्डे विद्यमानान्तरावकाशे वर्तमानः सङ्कर्षणोऽत्राहं विचेष्ट इत्यादाविच्छति । अथ तदानीमोजः

सहबलात्मको मुख्यवायुरुत्पद्यते। पुनर्विशेषतश्चेष्टां करोमीतीच्छायां स वायुः प्राणापानादिपञ्चरूपो भवति। तत्र प्राणस्योर्ध्वस्वभावस्येतस्ततो विसर्पण-वेगातिशयेन स्थूलाण्डस्योर्ध्वदेशे नारिकेलफलोपरि विन्यस्तजम्बीर-फलमिवासञ्जातमुखनासिकादिरन्ध्रं केवलं मण्डलाकारं शिरोभिधोऽवयव-विशेषो मासेन जायते।

ततो हरेर्नानाकर्मचिकीर्षायां हस्तौ गतिचिकीर्षायामङ्घ्री तत्र पादाख्य-मिन्द्रियं प्रजानन्देच्छायां शिश्नस्तत्रोपस्थाख्यमिन्द्रियं मलादेरुत्सिसृक्षायां गुदं तत्र पाय्वाख्यमिन्द्रियं परकायप्रवेशापेक्षायां नाभिद्वारं चेत्याद्यवयवजातं द्वितीयेन मासेन जायते। ततस्तृतीयेन मासेन हरेरिच्छया नखलोमचर्माणि लिङ्गछिद्रं च जायन्ते। ततश्चतुर्थेन मासेन तदिच्छया त्वक्चर्ममांसरुधिर-मेदोमज्जास्थिरूपाः सप्तधातवो जायन्ते। तत्र देहे षष्ठ्युत्तरशतसङ्ख्या-कान्यस्थीनि तावत्सङ्ख्याका एव मज्जानो भवन्ति। ततः पञ्चमे मासि हृदयाकाशे प्राणस्येतस्ततः सङ्घर्षणेनाशनापिपासाख्यो द्विरूपो मारुतो बभूव। तेनाशनापिपासायां च शिरसि मुखं निरभिद्यत। ततो रसग्रहणेच्छायां तत्साधनं रसनेन्द्रियं स्वगोलकेन ताल्वाख्येन जिव्हामूलेन सहोत्पद्यते। ततो वक्तुमिच्छायां मुखाख्ये गोलके वागिन्द्रियमजायत। अन्तराकाशे वायौ च दोधूयति निरुद्धस्य वायोर्निर्गमनमार्गेच्छायां नासिके निरभिद्येताम्। गन्धग्राणनेच्छायां तत्र घ्राणेन्द्रियमजायत। कीदृशोऽह-मित्यात्मनो दिदृक्षायामक्षिणी गोलके चक्षुरिन्द्रियं चाजायन्त। देवादि-भिर्बोध्यमानस्य तच्छ्रवणेच्छायां श्रोत्रेन्द्रियं तद्गोलकौ कर्णौ चाजायेताम्। तत्र तत्र पदार्थेषु मार्दवकाठिण्यौ दृश्यौ।

औष्ण्यशैत्यादिज्ञानेच्छायां त्वगिन्द्रियमजायत। श्रीहरिमाहात्म्य-निदिध्यासनादीच्छायां गोलकभूतं हृदयं मनआख्यमिन्द्रियं चाजायत। ततः सङ्कल्पविकल्पेच्छायां सङ्कल्पविकल्परूपं मनः श्रुतस्यार्थस्य निश्चयेच्छायां बुद्धिः। अस्वरूपे स्वरूपमतीच्छायामहङ्कारः। स्मरणेच्छायां चित्तम्।



चेतोव्याप्तीच्छायां चेतनेति। इति मनसः पञ्चमनोवृत्तयोऽपि हृदय एव जायन्ते। अन्नपानादेरिच्छायामुदरकुक्षिनाड्यो जायन्ते। गुदवृषणयोर्मध्यं नाडीनां मूलाधारस्थानम्। तत्र सर्वतः श्रेष्ठा सुषुम्ना नाम्नी प्रधाननाडी मूलाधारमारभ्य शिरसि ब्रह्मरन्ध्रपर्यन्तमृजु स्थिता। सा च वज्रिका आर्यका प्रकाशिनी वैद्युत। ब्रह्मनाडीति पञ्चप्रभेदिनी। तत्र मध्ये ब्रह्मनाडी पश्चिमे वज्रिका वामे आर्याऽग्रे प्रकाशिनी दक्षिणे वैद्युतेति। एवं पञ्चप्रभेदायाः सुषुम्नायाश्चतुर्दिक्षु शतनाड्यः सन्ति। शतनाडीष्वपि वज्रिकेडाधारिणी-पिङ्गलेति चतस्रो नाड्यः प्रधानाः। तत्र पश्चिमे वज्रिका वामे इडा प्राच्यां धारिणी दक्षिणायां पिङ्गला ज्ञेया। एवं विद्यमानानामेकोत्तरशतनाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखा नाड्यो भवन्ति। पुनस्तस्यां च प्रतिशाखा नाड्यो भवन्ति। एवञ्च सम्भूय शरीरे प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात्।

एवं सर्वावयवोत्पत्त्यनन्तरं ततः षष्ठे मासे मातुरबाधाय गर्भवेष्टनपुटि-काख्येन जरायुणा निरुच्छ्वासं दृढं बध्वा गर्भस्थितदेहस्य नाभिमारभ्य मातृशरीरस्थान्त्रसुषिरपर्यन्तमाप्यायिनी नाम नाडी निबध्यते। तन्नाडीद्वारा मातृभुक्तान्नपानादिसूक्ष्मभागैराप्यायितदेहो गर्भगो जन्तुर्नारिकेलफलं यथा सकोश एव वर्धते तथा सकोश एवाप्रसवं वृद्धिमुपैतीति परम्परया। ततः सप्तमे मासे भगवान्सुन्दरकरचरणादिसर्वावयवसंयुतं मृदुतरं नवतरं कल्याणतरं सर्वव्यवहारोपयुक्तं सर्वकलाकुशलं सर्वावबोधसाधनं चतुर्लक्ष-सङ्ख्याकयोनिभेदभिन्नं मानुषं शरीरं निर्माय तद्दृष्ट्वा प्राक् स्वनिर्मितेभ्यो नवलक्षसङ्ख्याकजलजयोनिभ्यो विंशतिलक्षसङ्ख्याकस्थावरयोनिभ्यो रुद्र लक्षसङ्ख्याककृमियोनिभ्यो दशलक्षसङ्ख्याकपक्षियोनिभ्यस्त्रिंशल्लक्षसङ्ख्याक-पश्वादियोनिभ्योऽप्यधिकं निरवधिकां मुदमवाप्य दूरत एव स्थित्वैकेनैव तत्राप्यनन्यापेक्षयैव रूपेण तत्तच्छक्तिप्रेरणादिव्यापारं कर्तुमतिसमर्थोऽपि येन केन मिषेणानेकरूपेण स्वभावनायैव जगत्सृष्टेरारब्धत्वेन केवलं

लीलयाऽत्र प्रविश्यैव तत्र तत्र स्थितेरनेकरूपैरेव तत्रापि कैश्चिद्रूपैर्धारणं कैश्चित्पोषणं कैश्चिच्चेष्टनं कैश्चित्करणं कैश्चिद्बोजनं कैश्चिदेकं कैश्चिद्द्वयं कैश्चित्त्रयमित्यादिरूपेण तथा देवेषु परमानुग्रहेण तैरेव शारीरसर्वव्यापाराणि कारयित्वोपासकानां विष्णुशब्दार्थभूतं सर्वचेष्टयितृत्वं विशिष्टबलवत्त्वं च प्रकटीकुर्व इत्यालोच्यात्मानं व्यूहशोऽनेकधा विभज्य ब्रह्मवायुभ्यां सहैवेदं शरीरं प्राविवेश।

तथा हि। तत्र तावद्भगवान्वासुदेवः शरीरं धारयितुमनिरुद्धादिरूपपञ्चकं गृहीत्वा ब्रह्मवायुभ्यां सह प्रपदाभ्यां प्राविशत्। यस्मादसावाभ्यां प्रपेदे तस्मादनयोरङ्गयोः प्रपदाख्याऽजायत। ततो भगवान्प्रपदयोरनिरुद्धं संस्थाप्य ततोऽप्यूर्ध्वं गत्वा स्थितः। हरेः पूर्वस्माद्गमनात्तावूरू आस्ताम्। ततस्तत्र प्रद्युम्नं संस्थाप्य किञ्चिदूर्ध्वं ततो गत्वा तत्र स्थित्वा वायुमाहोरुगरणं कुर्विति। स तथा चकार। यत्र स्थित्वा वायुरुरुगरणं चक्रे तत्स्थानमुदरं नाम। ततस्तत्र सङ्कर्षणं संस्थाप्य किञ्चिदूर्ध्वं गत्वा मम निवासाय विस्तार-संयुतमुरःस्थानं कुर्विति वायुमाह। तथाऽकरोत्स वायुश्च। उरुत्व-तस्तत्स्थानमुरोनामकम्। उरोर्मध्ये च हृदयम्। तत्र वासुदेवं संस्थाप्य तत ऊर्ध्वं गत्वा मूर्ध्नि ब्रह्मनाड्यां द्वारदेशात्किञ्चिदधःप्रदेशे द्वादशदले षष्ठे कमले नारायणाख्येन रूपेण तस्थौ। एवं प्रपदाविष्टो वासुदेवोऽ-निरुद्धादिपञ्चरूपेण पञ्चस्थानेषु स्थित्वा देहं बिभर्ति।

तथा पञ्चरूपो भगवान् षट्सु स्थानेषु स्थित्वा सुषुम्नां बिभर्ति। तत्र मूलाधारे चतुर्दले रक्तकमले त्रिकोणवन्हिमण्डले प्रद्युम्नः। नाभौ षट्दले रक्तपद्मे षट्कोणवायुमण्डले सङ्कर्षणः। हृदयेऽष्टदले रक्तपद्मे द्वादशकोणे सूर्यमण्डले वासुदेवः। तालुस्थाने द्विदले शुक्लपद्मे वर्तुले शशिमण्डलेऽ-निरुद्धः। भ्रूस्थाने चतुर्दले शुक्लपद्मे त्रिकोणवन्हिमण्डले नारायणः। मूर्ध्नि द्वादशदले शुक्लपद्मे वर्तुलशशिमण्डलेऽपि नारायणः। शरीरधारकेषु पञ्चमं रूपं यच्च सुषुम्नाधारकेषु नारायणाख्यं षष्ठतयोक्तं तदुभयमप्येकमेवेति



बोध्यम्। तत्र सुषुम्ना पञ्चविधा वज्रिकाऽऽर्या प्रकाशिनी वैद्युता ब्रह्मनाडीति। एकस्यामपि पञ्चपुटवंशनाडीव पृष्ठाद्यवच्छेदकभेदेन पञ्चभागाः सन्ति। तत्र पृष्ठे वज्रिकायां हरिद्वर्णः प्रद्युम्नः। वामे आर्यायां नीलवर्णोऽनिरुद्धः। अग्रे प्रकाशिन्यां शुक्लो वासुदेवः। दक्षिणे वैद्युतायां पिङ्गलः सङ्कर्षणः। मध्ये ब्रह्मनाड्यां रक्तो नारायणः।

एवमन्या अपि नाडीर्बिभर्तुं तत्र तत्र तिष्ठति। तथा हि। सुषुम्नायाश्चतुर्दिक्षु शतं नाड्यः सन्ति। तासु नाडीषु नारायणादिशतरूपाणि सन्ति। शतनाडीष्वपि वज्रिकेडाधारिणीपिङ्गला चेति चतस्रः प्रधाननाड्यः सभेदायाः सुषुम्नायाश्चतुर्दिक्षु सन्ति। तत्र पश्चिमे वज्रिकायां प्रद्युम्नो वामे इडायामनिरुद्धोऽग्रे धारिण्यां वासुदेवो दक्षिणे पिङ्गलायां सङ्कर्षण इति। तथा द्वासप्ततिसहस्रनाडीषु बृहतीसहस्रवाच्यानि द्वासप्ततिसहस्ररूपाणि सन्ति। तत्र बृहतीसहस्रर्चां षट्त्रिंशत्सहस्ररूपाणि स्वराक्षराणि तावन्ति व्यञ्जनाक्षर-वाच्यानि। तत्र स्वराक्षरवाच्यानि षट्त्रिंशत्सहस्ररूपाणि दक्षिणभागस्थषट्-त्रिंशत्सहस्रनाडीषु व्यञ्जनाक्षरवाच्यानि तावन्ति रूपाणि तु वामभागस्थ-षट्त्रिंशत्सहस्रनाडीष्विति विवेकः। एवं द्वासप्ततिनाडीप्रभेदभूतासु तदवान्तरनाडीषु द्वासप्ततिसहस्ररूपोद्भूतानि रूपाणि तिष्ठन्ति।

ततः शिरःकपालोपरिदेशे वासुदेवः। केशमूले सङ्कर्षणः। शिरसि नारायणः। ललटे केशवः। भ्रूद्वये भ्रूमध्ये च नारायणः। कपोलद्वये सङ्कर्षणः। उत्तरोष्ठे वासुदेवः। अधरोष्ठे सङ्कर्षणः। दन्तपङ्क्तिद्वये प्रद्युम्नः। कण्ठकूबरे गोविन्दः। दक्षिणकन्धरे त्रिविक्रमः। वामकन्धरे हृषीकेशः। ककुदि दामोदरः। पृष्ठभागे प्रद्युम्नः। दक्षिणबाहावूर्ध्वार्धे वासुदेवः। अधरार्धेऽनिरुद्धः। वामबाहावूर्ध्वार्धे सङ्कर्षणः। अधरार्धे प्रद्युम्नः। हस्तगत-रेखाविशेषेषु वासुदेवादिरूपचतुष्टयम्। हस्ताङ्गुलीषु नारायणादि-रूपपञ्चकद्वयम्। नखेष्वपि तदेव पञ्चकद्वयम्। उरस्यनिरुद्धः। स्तनद्वये नृसिंहः। उदरे नारायणः। दक्षिणकुक्षौ विष्णुः। वामकुक्षौ वामनः।

गम्भीरनाभौ नृसिंहः । ललाटोदरकण्ठरूपस्थानत्रयगतवलित्रयेषु रामकृष्णकपिलाः । बस्तौ नृसिंहः । वृषणे वासुदेवः । कटिप्रदेशे नारायणः। ऊरुद्वये वासुदेवः । जानुद्वये सङ्कर्षणः । जङ्घाद्वये प्रद्युम्नः । अङ्घ्रिद्वये सङ्कर्षणः । पादरेखाविशेषेषु वासुदेवादिरूपचतुष्टयम् ।

पादाङ्गुलीषु नारायणादिरूपपञ्चकद्वयम् । नखेष्वपि तदेव रूपपञ्चक-द्वयम् । सार्धत्रिकोटिसङ्ख्याकेषु रोमसु तावद्रूपी प्रद्युम्नः । त्वचि सङ्कर्षणः । चर्मणि नारायणः । मांसे वराहः । रुधिरे नारायणः । मेदस्यनिरुद्धः । षष्ठ्युत्तरशतत्रयसङ्ख्याकासु मज्जासु तावद्रूपी सङ्कर्षणः । षष्ठ्युत्तर-शतत्रयसङ्ख्याकेष्वस्थिषु तावद्रूप्यनिरुद्धः । षष्ठ्युत्तरशतत्रयसङ्ख्याकेषु पर्वस्वपि तावद्रूप्यनिरुद्धः । अन्नमयकोशेऽनिरुद्धः । प्राणमयकोशे प्रद्युम्नः । मनोमयकोशे सङ्कर्षणः । ज्ञानमयकोशे वासुदेवः । आनन्दमयकोशे नारायणः । अव्यक्ततत्त्वे नारायणः । गुणत्रये विश्वादित्रयमनिरुद्धादित्रयं च । महत्तत्त्वे वासुदेवः । अहङ्कारतत्त्वे सङ्कर्षणः । विज्ञानतत्त्वे प्रद्युम्नः । मनस्तत्त्वेऽनिरुद्धः । आकाशे नारायणः । वायौ वासुदेवः । तेजसि सङ्कर्षणः। अप्सु प्रद्युम्नः । पृथिव्यामनिरुद्धः ।

मनस्यनिरुद्धः । मनःप्रभेदे मनस्यनिरुद्धः । बुद्धौ प्रद्युम्नः । अहङ्कारे सङ्कर्षणः । चित्ते वासुदेवः । चेतनायां नारायणः । पञ्चविधमनोगोलके हृदये माधवः । दक्षिणचक्षुषि प्रद्युम्नः । वामचक्षुष्यनिरुद्धः । तद्गोलकद्वये कपिलः। चक्षुर्द्वये शुक्ले रामः । कृष्णे कृष्णः । कनीनिकायां कपिलः । श्रोत्रेन्द्रिये वासुदेवः । तद्गोलकद्वयेऽनिरुद्धः । घ्राणेन्द्रिये प्रद्युम्नः । तद्गोलके नृसिंहः । रसनेन्द्रिये सङ्कर्षणः । तद्गोलके चर्मणि नारायणः। वागिन्द्रिये वासुदेवः । तद्गोलके मुखे भार्गवो रामः । पाणीन्द्रिये वासुदेवसङ्कर्षणौ । तद्गोलके हस्तद्वयेऽपि वासुदेवसङ्कर्षणौ । पादेन्द्रिये सङ्कर्षणः । तद्गोलके पादद्वयेऽपि सङ्कर्षणः । पाय्विन्द्रिये प्रद्युम्नः । तद्गोलके गुदे वासुदेवः । उपस्थे नारायणः। तद्गोलके मेढ्रे वासुदेवः । सर्वशरीरे शरीरनामेति ।



अथ चेष्टयितुं वासुदेवो ब्रह्मवायुभ्यां सह मस्तकसीमानं विदार्य ब्रह्मनाडीरन्ध्रद्वारा शरीरं प्रविश्य तत्रैव द्वारदेशे षट्कमालादुपरिभागे स्वयं स्थित्वा पुना रूपत्रयेणाधः प्रविश्य तत्रानिरुद्धरूपेण चक्षुषि प्रद्युम्नरूपेण मनसि सङ्कर्षणरूपेण हृदये स्थित्वा क्रमादवस्थात्रये चेष्टयतीति । अत्र सर्वत्र यत्र यत्र धारकं पोषकं चेष्टकं चेत्यादिबहुरूपं पृथक् पृथगुच्यते । तत्र तत्रैकैकरूपमेव लीलया धारणाद्येकैकव्यापारं करोति । यत्र पुनर्द्वयमेवोच्यते तत्र तद्रूपद्वयमेव धारणपोषणे इव चेष्टादिसर्वव्यापारं करोति । यत्र तु धारकमेव तत्र तु तदेकमेव धारणपोषणादिसर्वव्यापाराणि निर्वहतीति रहस्यम् ।

एवं नारायणो धारणाद्यनेकप्रयोजनाय शरीरं प्रविश्य लीलयैव स्वात्मानं बहुधा विभज्यानन्तरूपैः परमाणुप्रदेशमप्यविहायाङ्गप्रत्यङ्गशो व्याप्य स्थित्वाऽपि पश्चाद्ब्रह्मादिदेवानाज्ञापयामास यथायथं प्रविशतेति । ते ह तथा चक्रुः । तत्र ब्रह्मवायू सरस्वतीभारत्यौ चाविशेषेण सर्वत्र विविशुः । देहे रुद्रः स्वायम्भुवो मनुश्च । प्राणापानव्यानोदानसमानेषु मुख्यवायुः क्रमात्पञ्चरूपेण प्राणे प्राणोऽपानेऽपान इत्यादिरूपेण गुणत्रये ब्रह्मरुद्रेन्द्र-स्कन्दास्तत्पत्न्यश्च । महत्तत्त्वे ब्रह्मवायू सरस्वतीभारत्यौ च । अहङ्कारतत्त्वे रुद्रशेषगरुडाः । बुद्धितत्त्वे उमावारुणीसौपर्ण्यः । मनस्तत्त्वे इन्द्र-कामानिरुद्धाः । इन्द्रियाणां मध्ये ज्ञानेन्द्रियेषूमा । कर्मेन्द्रियेष्वाहङ्कारिक-प्राणः। तत्र मनसि ब्रह्मवायू रुद्रशेषगरुडेन्द्रचन्द्रवरुणाः । श्रोत्रे चन्द्रवरुण-मित्रयमकुबेराः । चक्षुषि सूर्यः । रसने वरुणः । घ्राणेऽश्विनौ । त्वचि वायुसुतो मरुत् । वाच्यग्निः । हस्तयोर्वायुसुतो मरुतो दक्षश्च । पादयोर्जयन्तः शचीसुतौ यज्ञशम्भू च । पायौ मित्रयमौ । उपस्थे शिवस्वायम्भुवौ । आकाशे विनायकः । वायौ वायुसुतो मरीचिः । अग्नावग्निः पावकाख्यः । अप्सु वरुणः । पृथिव्यां धरेति । अत्र पुष्करादीनां प्राणान्तानां सर्वेषामपि देवानां सर्वत्र स्थितत्वेऽपि बुद्ध्यारोहाय तत्र तत्र विशिष्योक्तिरिति ।

एवं भगवान्भागवतधर्मज्ञानफलकर्तारं जीवमारभ्य ब्रह्मपर्यन्तं द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नादितारतम्यानुसारेणोत्तरोत्तरमधिकं दातुं शरीरे ब्रह्मादिदेवान्प्रवेशयित्वा तथा तद्विपरीतफलं कल्यन्तानां दैत्यानामुत्तरोत्तरमधिकं दातुं शरीरे प्रवेशाय तानप्याज्ञापयामास । तत्र यथा ब्रह्मादयो महदादितत्त्वानि विविशुस्तथा दैत्या अपि दीनत्वाद्देवनामानो ब्रह्मेन्द्रादिसमाननामानश्च स्वान्तःस्थानि तत्त्वानि यथायथं विविशुः ।

ततो भगवान् श्रीपतिर्वज्रवैडूर्यादिनानामणिगणखचितप्रतिमायामिव नानावर्णोज्वलस्वमूर्तिसमूहखचिते जीवशरीरे ब्रह्मादीन्पुष्करान्तान् देवान् देवारींश्च प्रवेशयित्वाऽऽसन्ने प्रसवकाले जीव गर्भाद्बहिर्निष्कासयितुमपानवायुमाज्ञापयामास । स तु तदानीमेव सूतिवाताख्येन स्वांशेन गर्भं मातुरुदराद्बहिर्निष्कासयामास । तद्वायुवेगातिशयेन गर्भस्थो जीवो गर्भकोष्ठं विहाय क्रमादधोधो गच्छन्योनिद्वारमागत्येक्षुयन्त्रादिवद्योनेर्गच्छन्नतिश्रान्तो भूम्यां पतितः क्षणेन बाह्यवायुस्पर्शेन किञ्चिद्विश्रान्तः सचेतनो भवति । तदेतद्भगवतो हरेर्द्वितीयं जन्मोच्यते । पूर्ववदेव पूर्वस्मात्स्थानात्स्थानान्तरं प्रति गतत्वात् । एवं पितृस्थो भगवान्प्रद्युम्नो जीवार्थे कर्मकरणायैतद्रूपं निधाय पितृमरणानन्तरं पितुरन्यत्र जनने पित्रा सह स्वयमपि जायते । तदेतद्भगवतस्तृतीयं जन्मेत्युच्यते । इत्येवमनुसन्धेयम् ।

अत एव हि ज्ञानिनो बान्धवाः पृथिव्यां पुत्रजन्म श्रुत्वा परमसम्भ्रमेण वाद्यघोषैर्गोभूर्वस्त्रालङ्कारादिदानसन्तुष्टविप्रवर्याशीर्वचनैर्लाजाक्षतनीराजनादिभिश्च महोत्सवं कुर्वन्ति । अज्ञास्तु केवलं पुत्रजन्मैवेति मत्वा शिष्टाचारपरम्पराप्राप्तत्वादुत्सवं कुर्वन्ति । अत्र न केवलं भगवान् स्वयमेवाजायत किन्नाम स्वपूजात्मकं पुरुषाख्यं यज्ञं च जनयामासेति स्वस्मिन्भगवत्पूजात्मकयज्ञरूपत्वं चानुसन्धेयम् ।

तथा हि । पुरुषयज्ञसाम्यं चैवम् । प्रसिद्धयज्ञे यज्ञारम्भात्पूर्वकाले देवतासोमाभिषवणात्पूर्वं सोष्यतीति व्यवहारः । अभिषवणानन्तरमसोष्टेति



च व्यवहारः । सवनत्रयं तद्देवताश्च क्रमाद्वसुरुद्रादित्याख्याः सन्ति ते सर्वेऽपि पुरुषयज्ञे पुरुषोत्पत्तेः पूर्वकालस्य नारायणो देवता । पितुः शरीरान्मातुरुदरे प्रविश्य पुरुषो जनिष्यतीति यो व्यवहारः स एव सोष्यतीति व्यवहारः । मातुः सकाशादुत्पत्तौ यो जनित इति व्यवहारः स एवासोष्टेति व्यवहारः । पुरुषस्य शतमायुस्तस्य किञ्चित्पलाधिकविंशति घटिकाधिकदशादिनाधिकदशमासात्मकवर्षविवक्षया षोडशोत्तरशतवर्षाणि भवन्ति । तत्र भागत्रयम् । प्रथमचतुर्विंशतिवर्षात्मक एकः । तदुत्तरचतुश्चत्वारिंशद्वर्षात्मकोऽपरः । तदुत्तराष्टचत्वारिंशद्वर्षात्मकोऽपरः ।

तत्र प्रसिद्धयज्ञे प्रातःसवनं चतुर्विंशत्यक्षरात्मकगायत्रीछन्दस्कमन्त्रोपेतम् । अयमपि चतुर्विंशतिवर्षात्मककालोपेत इति प्रथमोभागः प्रातःसवनं तस्य वासुदेवो मुख्यो देवः । तत्त्वेशा एव योग्यं प्राणिजातं सुखेन वासयन्तीति वसुनामानोऽवान्तरदेवताः । तथा प्रसिद्धयज्ञे माध्यंदिनं चतुश्चत्वारिंशदक्षरात्मकत्रिष्टुप्छन्दस्कमन्त्रोपेतम् । अयमपि चतुश्चत्वारिंशद्वर्षात्मककालोपेत इति यो मध्यमभागो मध्यन्दिनसवनं तस्य सङ्कर्षणो मुख्यदेवः । तत्त्वेशा एवायोग्यं जनं रोदयन्तीति रुद्रनामानोऽवान्तरदेवताः । तथा प्रसिद्धयज्ञेऽष्टचत्वारिंशदक्षरात्मकं जगतीछन्दस्कमन्त्रोपेतं तृतीयं सवनम् । अयमप्यष्टचत्वारिंशद्वर्षात्मक- कालोपेत इति चरमो भागस्तृतीयं सवनमित्युच्यते । तस्य प्रद्युम्नो मुख्यो देवः । तत्त्वेशा एवादानादिकारयितृत्वादादित्यनामानोऽवान्तरदेवताः । प्रसिद्धयज्ञे सवनत्रये तत्तद्देवता वस्वादयो यजमानैः प्रार्थिताः स्वस्वाधिष्ठितकाले प्राप्तविघ्नान्निवारयित्वा यज्ञं समापयन्ति । अत्रापि प्रातःसवने भो वसवो यूयं विष्णुपूजात्मकयज्ञरूपस्य मम ज्वराद्युपद्रवेण यथा लोपो मा भूयात्तथा चतुर्विंशतिवर्षपर्यन्तं संरक्षणं कुरुत । भागवतानां भवतामाधिपत्ये भगवत्पूजाविच्छेदो नोचित इत्येवं प्रार्थिता वसुनामानस्तत्त्वेशा रक्षन्ति । एवमेवोत्तरसवनद्वयेऽपि प्रार्थितास्तत्त्वेशास्तत्र तत्र रक्षन्ति । किञ्च प्रसिद्धयज्ञे दीक्षा उपसदः

स्तुतशस्त्रे दक्षिणा अवभृथ इति षडाङ्गानि सन्ति । तानि च तत्र तत्रैव प्रदर्शयिष्यामः । यज्ञानन्तरकालेऽनिरुद्धो देवतेति । यस्मिञ्जन्मन्येव-मनुसन्धानसामर्थ्यमीश्वरो ददाति तत्रैवातीताशेषदेहानामेष्यतामपि सर्वेषामेव मनुसन्धेयम् । तेन भगवद्भक्तानां सर्वाण्यपि जन्मानि भगवत्पूजात्मकानि भवन्ति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीयेस्थूलशरीरसृष्टिनामकपञ्चमं प्रकरणम् ॥५॥*

## ॥ अथावस्थात्रयनिर्माणप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं बिम्बरूपो हरिर्द्वितीयेन रूपेण स्थूलशरीरं निर्माय तदनुप्रविश्य कार्यकारणप्रेरकान्ब्रह्मादीन्पुष्करान्तान्देवान्देवारींश्च प्रवेशयित्वा व्यापाराणि कारयितुं तावदादौ जाग्रदवस्थात्रयं व्यवस्थापयति । तत्रायं क्रमः। आदाववस्थात्रयातीतस्यापि बिम्बरूपस्य हरेर्लीलयाऽवस्थात्रय-निर्माणेच्छा । तदनु ब्रह्मादीनां तदिच्छा ततोऽनिरुद्धप्रद्युम्नसङ्कर्षणापर-पर्यायविश्वतैजसप्राज्ञात्मकबिम्बगुणत्रयस्य तदात्मिकाया बुद्धेश्चोद्बोधः । ततो बिम्बगुणत्रयस्य स्वकार्यबिम्बबुद्ध्यधिष्ठितस्यैव ब्रह्माद्यंशैः सह जीवस्वरूप-मनःप्रभेदभूतबुद्धिद्वारा स्थूलमनःप्रभेदभूतायां बुद्धौ प्रवेशः । सा तावद्गुण-त्रयोपादानकत्वाद्गुणत्रयरूपा । तस्याश्च तन्नियामकानि विश्वादिरूपाणि ब्रह्मादीनां रूपाणि च सन्ति । तत्र बिम्बबुद्धेः प्रद्युम्नस्य स्थूलबुद्धिनियामकेन प्रद्युम्नेनैकीभावो भवति । तथा च बिम्बगुणत्रयस्य विश्वादेः स्थूलबुद्धि-सत्त्वादिगुणप्रेरकैर्विश्वादिभिरेकीभावः । तथा तेन सहागतानां बाह्याद्यंशा-नामत्रत्यैर्ब्रह्मादिभिश्चैकीभावः ।

ततो विश्वादिभिर्ब्रह्मादिभिश्च गुणत्रयात्मिकाया बुद्धेरुद्बोधो भवति । उद्बुद्धायाश्च बुद्धेर्वृत्तित्रयमुत्पद्यते जाग्रत्स्वप्नःसुषुप्तिरिति । तत्र सत्त्वाज्जागरो रजसा स्वप्नस्तमसा सुषुप्तिः । ततस्तन्नियमनाय हरेर्विश्वादिरूपत्रयेणैव ब्रह्मादीनां च प्रादुर्भावस्तत्र प्रवेशश्च । तथा तदानीमेव कालाख्यस्य



हरेर्ब्रह्मादीनां च यस्मिञ्जागरः सा जाग्रदवस्था । यस्मिन्काले स्वप्नः सा स्वप्नावस्था । यस्मिन्सुप्तिः सा सुषुप्त्यवस्थेति । जागराद्युपलक्षितकालत्रयं निर्माय तन्नियामकतया जाग्रदाद्यवस्थानामकरूपत्रयेण प्रादुर्भावः । ततो विश्वाद्विश्वस्तैजसात्तैजसः प्राज्ञात्प्राज्ञ इति त्रीणि रूपाणि प्रादुर्भवन्ति ।

तत्र विश्वो दक्षिणाक्षिस्थाने तिष्ठति । तैजसः स्वप्नस्थाने । प्राज्ञो हृदयस्थाने । ततो बिम्बस्य नानाविधज्ञानकर्मसुखादीच्छायां बिम्बमन आदिसर्वेन्द्रियाण्युक्तानेकदेवताधिष्ठितानि जीवमनआदिसर्वेन्द्रियद्वारा स्थूलमनआदिसर्वेन्द्रियेषु प्रविशन्ति ।

अत्र विशेषं विशिष्य तत्तदिन्द्रियव्यापारनिरूपणावसरे प्रदर्शयिष्यामः । तदा बिम्बचक्षुषा सह बिम्बविश्वस्याप्यागमनं तस्य स्थूलचक्षुःस्थितेन विश्वेनैकीभावश्च भवति । विश्वस्य द्वौ पादौ चत्वारो हस्ता एकः शुण्डादण्ड इति सप्ताङ्ग एकोनविंशतिमुखवांश्च संस्तिष्ठति । तत्र मध्यमं गजमुखाकारम् । पार्श्वयोस्तु नव नवसङ्ख्याकानि मुखानि नरमुखाकाराणि सन्तीति ॥

*इति श्रीविष्णुतीर्थविरचितषोडशीयेऽवस्थात्रयनिर्माणनामकं षष्ठप्रकरणम् ॥६॥*

## ॥ अथ प्राणव्यापारप्रकरणम् ॥

॥ हरिः ॐ ॥ अथैवंविधो विश्वः खण्डेशान्महाराज इव मनआदि सर्वेन्द्रियेषु तत्तद्रूपविशेषाणि नियम्य तैर्जाग्रदवस्थाकालीनान्सर्व-व्यापारान्कारयति । तान्व्यापारान्यथामति निरूपयिष्यामः । तत्रादौ पञ्चप्राण व्यापारो निरूप्यते । भगवान् श्रीपतिर्जीवदेहं निर्माय तस्योत्सर्गतः शतसंवत्सरजीवनं च नियम्य तस्य प्राणसत्त्वैकनिबन्धनतां च नियम्य दासपञ्चकस्थितेषु मुख्यप्राणस्य प्राणादिपञ्चरूपेषु स्वस्य नारायणादि पञ्चरूपात्मकप्राणादिपञ्चरूपाणि निधाय तैस्तद्व्यापारान्करोति । तथा हि । प्राणो हि वायुर्मुखनासाश्रोत्रेषु चतुर्षु स्थानेषु स्थितस्तद्द्वारा

बहिर्गच्छन्सकारं व्यञ्जयन्सन्नुच्छ्वास इत्युच्यते । पुनरन्तः प्रविश्य हकारं व्यञ्जयति । स तु निःश्वास इति चाभिधीयते । तथा च गमनागमनभरेण हंसः सोऽहमित्यावर्तते । तत्र प्राणवायौ मुख्याभिमानी ब्रह्मा वायुश्च हंसरूपेण वर्तते । तथा हरिर्नारायणोऽपि । एवं त्रयोऽपि प्राणनाम्ना प्रणयन्ति वायुं तत्र चैवमनुसन्धेयम् । हंसो भगवानहं तु स तत्प्रतिबिम्ब इति । एवमनुसन्धातुरहोरात्रमखण्डितध्यानफलं शीघ्रं मोक्षलक्षणं च फलं प्राणो ददाति ।

पायूपस्थयोरपानवायुरस्ति । तत्रापाननाम्ना स्थितो वासुदेवो मलमूत्रादि बहिरपनयति । नाभिदेशे समानवायुरस्ति । तस्मिंश्च समाननाम्ना स्थितः सङ्कर्षणो जीवभुक्तमन्नं त्रेधा विभज्य तत्र स्थूलतमं पुरीषाय स्थाप्य मध्यमेन मांसं यथायोग्यमुपचितं कृत्वाऽणुतमेनेन्द्रियोपचयं यथायोग्यं करोति । तेन चेन्द्रियेण स्वव्यापारक्षमता भवति । द्वासप्ततिसहस्रनाडीषु व्याननामानिरुद्धाख्यो हरिरास्ते । स च वायुसञ्चाराभावे शरीरं नश्येदिति तद्रक्षणाय नाडीद्वारा सञ्चरन्प्राणापानयोः सन्धिं प्रवर्तयति । यदा चायं पुरुषो वक्ति वेदपारायणं करोति सामगानं करोत्यराणिमथनं करोत्याजिमुखं च गच्छति दृढतरधनुष आरोपणं गुरुतरशिलोद्धरणादिवीर्यवत्कर्म करोति तत्सर्वं व्यान एव । प्राणवायुमपानं च निरुध्य करोति । अत्र प्राणादिपञ्चकं तावत्पञ्चविधं भगवद्रूपं मुख्यप्राणरूपं गरुडादिरूपं प्राणपुत्ररूपं मुख्यामुख्यपञ्चकं चेति । तत्र प्राणः शेषोऽपानो गरुडो व्यानो मुख्य-वायुरुदानो रुद्रः समान इन्द्र इति मुख्यामुख्यपञ्चकम् । नारायण-वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनामकं भगवद्रूपपञ्चकम् ।

तत्र व्याने सङ्कर्षणेन सन्धिकार्यं क्रियमाणे प्राणापानौ नारायणवासुदेवौ लीलया निरुद्धाविव भवतः । पञ्चकचतुष्टयं तु निरुद्धमेव भवति । व्यानेन मुख्यवायुना क्रियमाणे प्राणापानौ भगवन्तौ मुख्यवायुश्च लीलयैव शेषगरुडौ प्राणपुत्राविति पञ्चकत्रयं निरुद्धमेव भवति । व्यानेन गरुडेन क्रियमाणे



पञ्चकचतुष्टयं लीलयैव दासपञ्चकं तु निरुद्धमेव । व्यानेन वायुसुतेन क्रियमाणे पञ्चकचतुष्टयं लीलयैव वायुसुतौ तु निरुद्धौ भवतः । जडं तु सर्वत्र निरुद्धमेव भवति । एवमेवान्यत्र ज्ञेयम् । सुषुम्नायामुदानवायुरस्ति । तत्रोदाननामा प्रद्युम्नो हरिस्तिष्ठति । स च जीवानां जीवनहेतुः । मृतान्नाडी-द्वारोर्ध्वं नयति । एवं हरिरेव वायुपञ्चकं स्वपूजात्वेन सञ्चारयति ।

तथा प्राणो नारायणः प्राणे स्थित्वा स्वविषयाणि कर्माणि करोति । अपानो वासुदेवोऽपाने स्थित्वाऽन्यकर्माणि त्यजति । व्यानः सङ्कर्षणो व्याने स्थित्वा तत्र प्रतिबन्धकनिरासं करोति । उदानः प्रद्युम्न उदाने स्थित्वा योगकर्माणि करोति । समानोऽनिरुद्धः समाने स्थित्वा देहेन्द्रियमनांसि नयति । प्राणेषु भगवदुपासकेन भगवत आयतनं प्रतिष्ठा रहस्यं नाम तत्प्रवृत्तिनिमित्तं चेति चतुष्टयमवश्यं ज्ञेयम् । तत्र प्राण एवायतनं तत्रस्था रमा प्रतिष्ठा प्रतिमेति यावत् । प्रिय इति रहस्यं नाम । प्राणिभिः क्रियमाणस्य भोजनस्य स्वप्रीत्यर्थत्वाद्भोजनप्रियत्वात्तत्प्रवृत्तिनिमित्तम् । अत एवाज्ञा अपि प्राणसंस्थस्य विष्णोरिच्छयैव भोजनार्थं चौर्याद्यपि कुर्वन्तीति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये प्राणव्यापाराख्यसप्तमप्रकरणम् ॥ ७ ॥*

## ॥ अथ भोजनप्रकरणम् ॥

॥ हरिः ॐ ॥ भोजनादिसमय एवमनुसन्धेयम् । तथा हि । भगवदङ्गेभ्यो जाता देवाः स्वजनकमङ्गं सेवन्ते । तत्र पृथिव्यग्नी मुखाज्जातौ । मुखेन भोगार्थं पृथिव्योषधीः सृजति । ताः पचत्यग्निरुद्युक्त आहृता आहृताः । पुनर्भोज्यपदार्थेषु सर्वत्राविशेषेण नारायणानिरुद्धौ ब्रह्माद्याः पुष्करान्ताश्च सर्वे देवास्तिष्ठन्ति । विशेषतस्त्वन्ने केशवः सोमश्च । परमान्ने नारायणो भारती च । भक्ष्ये माधवः सूर्यश्च । घृते गोविन्दो लक्ष्मीश्च । क्षीरे विष्णुः सरस्वती च । मण्डे मधुसूदनश्चतुर्मुखश्च । दध्नि वामनः सोमो वरुणश्च । सूपे श्रीधरो गरुडश्च । पत्रशाकेषु हृषीकेशो मित्रश्च । फलशाकेषु पद्मनाभः

शेषश्च। आम्लपदार्थेषु दामोदरः पार्वती च । अनाम्लपदार्थेषु सङ्कर्षणो रुद्रश्च । गुडशर्करादिमधुरद्रव्येषु वासुदेवः शक्रश्च । उपस्करे प्रद्युम्नो बृहस्पतिश्च । कटुद्रव्येऽनिरुद्धो यमश्च । रामठेलाकर्पूरकेसरादिसुगन्धद्रव्येषु पुरुषोत्तमः श्रीश्च । चोष्यपेयलेह्यखाद्येषु पक्वान्नेष्वधोक्षजो बुधश्च । तिलकूष्माण्डमाषादिनिर्मितेषु नृसिंहो दक्षश्च । माषभक्ष्येष्वच्युतो मनुश्च । लवणे जनार्दनो निर्ऋतिश्च । फले उपेन्द्रः प्राणश्च । ताम्बूले श्रीहरिर्गङ्गा च । स्वादूदके श्रीकृष्णो बुधश्च । सर्वशुद्धद्रव्येषु हंसः पुष्करश्च । स्थाल्यां भगवान्वह्निश्च । करीषकाष्ठादिषु सङ्कर्षणो वसन्तश्च । पाककर्तृषु विश्वम्भरः श्रीदेवी च । पात्रेष्वानन्दो वारुणी च । भोजनपात्रेषु सत्यो दुर्गा च । तदधःस्थितमण्डले वराहो भूमिश्चेत्याद्यास्तत्र तत्र तिष्ठन्ति । भोक्तृषु सङ्कर्षणप्रद्युम्नौ पुष्करान्ता देवाश्च तिष्ठन्ति । अवकाशप्रदो वासुदेवः ।

अथ वैश्वानरं ध्यायेत् । क्रोडात्मकत्वात् । द्युनामकं स्वर्गाधारमतितेजस्त्वात्सुतेजआख्यं वैश्वानरस्य शिरः । आयुषामादानादादित्याख्यमादित्याश्रयं सर्वरूपविषयकत्वाद्विश्वरूपाख्यं वैश्वानरस्य चक्षुः । आहवनीयाधारं वैश्वानरस्य मुखम् । दक्षिणाग्न्याधारं वैश्वानरस्य मनः । गार्हपत्याधारं वैश्वानरस्य हृदयम् । वेद्याधारं वैश्वानरस्योरः । दर्भाधाराणि वैश्वानरस्य लोमानि । ज्ञानायुरूपत्वाद्वाय्वाख्यस्तदाश्रयः । सर्वाशक्यकर्मकर्तृत्वात्पृथग्वर्त्मनामको वैश्वानरस्य प्राणः । दीप्तत्वादाकाशनामा तदाश्रयो विस्तृतया बहुलनामा वैश्वानरस्य मध्यदेहः । व्याप्तत्वादाप इत्युक्तोऽबाश्रयोऽतिरतिकरत्वाद्रयिनामा वैश्वानरस्य बस्तिर्नाभ्यधोभागः । कटिरूपो वाऽपानवाय्वाधारः । प्रथनात्पृथिवीनामानौ पृथिव्याश्रयौ प्रतिष्ठितत्वात्प्रतिष्ठानामानौ वैश्वानरस्य पादौ ।

एवं वैश्वानरमुदरे ध्यात्वा तस्य द्वारपालान्ध्यायेत् । तत्र पूर्वद्वारपः प्राणाभिमानी चन्द्रः । ऊर्ध्वद्वारप उदानाभिमानी मुख्यवायुः । उत्तरद्वारपः समानाभिमानीन्द्रः । श्रीप्राणभारत्यस्तु सर्वत्राविशेषेण द्वारपा इति । ततः



प्राणाय स्वाहेत्यादिमन्त्रैः पञ्च प्राणाहुतीर्जुहुयात् । ततो जठराग्नौ प्रतिष्ठितो वैश्वानरः प्राणिभिर्दत्तं प्राणादिद्वारेणागतं भक्ष्यभोज्यलेह्यचोष्यभेदेन चतुर्विधमन्नं पानीयं चाग्न्युद्दीपकाभ्यां नारायणवासुदेवात्मकप्राणापानाधिष्ठिताभ्यां प्राणापानाभ्यां युक्तः पचति । पक्त्वा च समानवायुस्थिते समाननाम्न्यनिरुद्धे प्रयच्छति । स तु तदन्नं गृहीत्वा त्रेधा विभज्य तत्र स्थूलतमं पुरीषाय स्थाप्य मध्यममणुतमं चेति भागद्वयं प्रगृह्य धारणपोषणचेष्टादिशारीरसर्वव्यापारनिर्वाहाय शरीरमङ्गप्रत्यङ्गशो व्याप्यानन्तानि भगवद्रूपाणि ब्रह्मादिपुष्करान्तानां रूपाणि च यत्र सन्ति तत्र तत्रैव स्वाधिष्ठितेन समानवायुना सहैव गत्वा समर्पयति । भागद्वयमपि चेतनाचेतनराश्यात्मकम् । तत्र मध्यमभागे यानि स्वरूपात्मकानि रसादीनि तान्येषु भुङ्क्ते । भगवान्यानि च रमादिस्वरूपात्मकानि तान्यपि तेषु कृपया स्वीकरोति । तद्गतस्वस्वरूपभूतभोग एव स्वीकरणम् ।

एवं भगवता स्वीकृतानि स्वस्वरूपाणि रसादीनि रमाद्याः स्वीकुर्वन्ति । तथा स्वस्वाधमस्वरूपात्मकान्यपि स्वीकुर्वन्ति । अत्रापि तत्तद्गतस्वस्वरूपभोग एव हि स्वीकरणम् । एवं स्वयं स्वभोग्यं भुक्त्वा लक्ष्म्यादिभ्योऽवरदेवतापर्यन्तेभ्यस्तत्तद्योग्यं दत्वोर्वरितेन प्राकृतेन रसादिना मांसाद्युपचयं करोति । एवमेवाणुतमेऽपि भागे भगवान्स्वभोग्यं भुक्त्वा लक्ष्म्यादिपुष्करान्तेभ्यस्तत्तद्योग्यं रसं दत्वोर्वरितेन प्राकृतेन रसादिनेन्द्रियाद्युपचयं यथायथं करोति । तेन च शरीरेन्द्रियेषु स्वस्वव्यापारक्षमता भवति । अत एव च तत्र तत्रान्नादेः समीकरणात्समान इत्युच्यते । एवं वैश्वानरं जानन्नधिकारी यत्स्वयं भुङ्क्ते मृष्टान्नं ब्राह्मणाय वा प्रयच्छति यच्चाण्डालायोच्छिष्टमपि वा प्रयच्छति तत्सर्वं तस्य साक्षाद्वैश्वानरात्मन्येव हुतं भवति ।

तथा सर्वैः प्राणिभिरद्यमानमन्नं मुख्यप्राणस्यान्नं पीतमुदकं मुख्यप्राणस्य वस्त्रम् । तत्र यद्भोजनादावमृतोपस्तरणमसि हे अमृत त्वमुपस्तरणमसि

प्राणस्योपस्तरणरूपवस्त्रमसीति प्रार्थयित्वा यज्जलं पीयते तदुपस्तरणाख्यं वस्त्रम् । यच्च भोजनान्तेऽमृतापिधानमसि, हे अमृत त्वं प्राणस्य पिधानमसीति प्रार्थयित्वा यज्जलं पीयते तत्तत्प्रावरणं वस्त्रमित्यनुसन्दधीत । वायुर्वैश्वानरं सर्ववेदैःस्तौति । तद्ध्वनिः कर्णपिधाने श्रूयते समुद्रनदी-ज्वालाशब्दवत् । अत एव वायुनोरुगरणादुदरमिति वैश्वानरस्य नाम । शरीरे यदौष्ण्यं प्रतीयते तदग्निगतप्राणस्थवैश्वानरस्यैव । ततो वैश्वानरं दृष्टं श्रुतं चेत्युपासीत । एवं हृदये त्रीणि रूपाणि सन्ति ।

तत्र हृदयं व्याप्यस्थितं हृदयनामकं जीवानामावासभूतं स्थानेशनामकं प्रादेशपरिमितं त्वाद्यम् । हृत्कर्णिकामूलगतं मूलेशनामकमङ्गुष्ठाग्रप्रमाणकं सदा जीवाधारकं हृदयमध्ये स्थितत्वाद्धृदयनामकं च द्वितीयम् । हृत्कर्णिकाग्रस्थितमग्रेशनामकं हृदयमध्ये स्थितत्वेन हृदयनामकं चाङ्गुष्ठ प्रमाणकं सुषुप्तिकाले जीवानां प्रवेशस्थानभूतं पुनः प्रबोधं दत्वा जीवान्बहिः कुर्वत्तृतीयमिति । हृदयगतो लोहितपिण्ड एव हृत्कमल-मित्युच्यते । तत्र स्थित्वा जीवभुक्तान्ने जीवेन्द्रियगोचरगन्धादिसारभूतं यत्तज्जीवोपकारकतया केशस्य सहस्रधा विभागे य एको भागस्तावत्परिमाणेन विद्यमानासु नाडीषु शुक्लादिनानावर्णो भगवान्निहित इति हेतोर्वाहितानामकनाड्यः परितः स्थितास्तद्द्वारा आयाति । तच्च विराण्णामको लक्ष्म्या सह भुङ्क्ते । तदेव तस्यान्नम् । एवं हृत्कमलस्य परितो जालकमिव वर्तमानं वयारूपं यत्तदेव तस्य वस्त्रम् ।

हृदयादूर्ध्वं स्थितनाड्येव सञ्चारमार्गे मुख्यप्राणस्तस्य निकटे स्थित्वा सर्ववेदैः गदा स्तुतिं करोति । सा च स्तुतिः कर्णपिधाने सर्वैरपि श्रूयते । तस्य पूर्वदिशीन्द्रः सभार्यः । पश्चिमे वरुणः सभार्यः । कोणे वायुः सभार्यः। उत्तरे चन्द्रः सभार्यः । कोणे रुद्रः सभार्यः । ऊर्ध्वभागे ब्रह्मवायू सभार्यौ । अधोभागे शेषकामौ सभार्यौ । किञ्चोपास्यस्य भगवत आयतनं प्रतिष्ठा रहस्यं नाम तत्प्रवृत्तिनिमित्तं चेति चतुष्टयं खलूपासकेन विज्ञेयम् । तत्र हृदयाख्यस्य



रूपत्रयस्यापि हृदयमेवायतनं रमा प्रतिष्ठा स्थितिरिति रहस्यं नाम । तत्र स्थानेशविषये जीवानां सर्वदा स्थितिदातृत्वं तत्पदप्रवृत्तिनिमित्तम् । अत एव तस्य स्थानेश इति नाम । मूलेशविषये तत्र धारकतया स्थितिहेतुत्वं तत्पदप्रवृत्तिनिमित्तम् । अग्रेशविषये तु सुप्तौ जीवानां प्रवेश्यतया स्थिति-हेतुत्वं तत्पदप्रवृत्तिनिमित्तं बोध्यम् । बिम्बस्य तु हृदयशब्दवाच्यः स्थानेश एवायतनं रमा मुख्या प्रतिमा तदनु प्राणस्तदनु क्रमात्पुष्करान्तास्तदनु जीवा हरिरिति रहस्यं नाम । हरत्यनिष्टमिति हरिरित्यात्यन्तिकानिष्टनिवृत्ति-रूपमोक्षदातृत्वं हरिपदप्रवृत्तिनिमित्तम् ।

एवं जीवानामिष्टदानायैवात्युत्तमं श्वेतद्वीपाभिधानं स्थानं चिदानन्द-रसात्मकं सुधास्राविणमश्वत्थं पुनः पुनः परित्यागशून्यतयाऽपराजितानामपुरं तत्प्रभुनिर्मितं यथेच्छपादप्रसरणोपयोगितया स्वसमपरिमाणं चित्सुवर्णमयं पर्यङ्कमलौकिकान्नवसनादिविविधभोगभवनं सरोवरं प्रमदातिरेकेणानवरत-ममरगणैराचीर्यमाणं स्वगुणगणानां मनसोपासनं वाचा वर्णनं च कायप्रह्वभावावलोकनं चातिहाय भरतखण्डरूपं कर्मस्थानं नवद्वारेण मलस्राविणमश्वत्थं क्षणभङ्गुरतया पुनः पुनः परित्यज्यमानं हृदयपुरं तत्रत्यलोहितपिण्डरूपमणुपर्यङ्कमल्पकटुलवणादिरसभोगं कथञ्चिदुपासनं प्रतिश्लोकमबद्धस्तवनं कायप्रवणगताभासदर्शनं चानुकम्पयैव स्वीकृत्यास्ते ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये भोजनं नामाष्टमं प्रकरणम् ॥ ८ ॥*

## ॥ अथेन्द्रियव्यापारप्रकरणम् ॥

॥ हरिः ॐ ॥ अथेन्द्रियव्यापारेष्वेवमनुसन्धेयम् । तथा हि । श्रीहरेर्यदा मनसा विहर्तुमिच्छा तदा बिम्बमनसोऽनिरुद्धस्य ब्रह्मादिपुष्करान्तदेवताद्वारा जीवस्वरूपभूतं मन आदाय बाह्यमनसि प्रवेशो भवति । ततो बिम्बमनसोऽनिरुद्धस्य बाह्यमनःस्थितेनानिरुद्धेनैकीभावः । ब्रह्मादि-पुष्करान्तानां देवानां च बाह्यमनःस्थैर्ब्रह्मादिपुष्करान्तैर्देवैरेकीभावः ।

जीवमनसस्तु बाह्यमनसा मिश्रीभावः । ततो वृत्तीनामभिव्यक्तिः । तत्र बाह्यमनस्तावदनेकविधम् । मनोबुद्धिरहङ्कारश्चित्तं चेतनेति पञ्चविधम् । कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्भीर्गीरिति दश विधम् । विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानाऽनुग्रहा चेति नवविधम् । कालमायानियतिमतिविद्याकलाप्रवृत्तिस्फूर्तिसंवित्प्रतिष्ठाशक्तिभेदेनैकादशविधम् । तथा शतसहस्रादिविधं चेति । एवमेव जीवस्वरूपभूतं मनोऽप्यनेकविधम् । तथा तन्नियामकं बिम्बमनोऽप्यनेकविधम् । तत्रानिरुद्धादिपञ्चरूपाण्येव बिम्बस्य मनोबुद्ध्यादिपञ्चकम् । मत्स्यादिदशरूपाण्येव कामादिदशकं विमलादिनवकं कालाद्येकादशकं नवैकं दशकं च । नारायणादिशतरूपाण्येव शतकं विश्वादिसहस्ररूपाण्येव सहस्रविधमित्यादि ।

तत्र स्वरूपमनोमिश्रितैर्बाह्यमनोभिर्यदा मनआदिभेदेन पञ्चविधाः कामादिभेदेन दशविधा विमलादिभेदेन नवविधाः कालादिभेदेनैकादशविधाः शतार्थविषयकतया शतविधाः सहस्रादिपदार्थविषयकतया सहस्रादिविधाश्च वृत्तय उत्पद्यन्ते । तदा तन्नियामकतयाऽनिरुद्धादिभ्योऽनिरुद्धादिरूपाणि मत्स्यादिभ्यो मत्स्यादीनि नारायणादिभ्यो नारायणादीनि विश्वादिभ्यो विश्वादीनीत्यादिरूपेण पञ्चदशनवैकादशशतसहस्रादिसङ्ख्याकानि मनोबुद्ध्यादितत्तद्वृत्तिनियामकान्येव प्रादुर्भवन्ति । एवं ब्रह्मादीनां पुष्करान्तानां देवानां च रूपाणि प्रादुर्भवन्ति । यदा च वृत्तयो विलीयन्ते तदा भगवतो ब्रह्मादीनां च रूपाणि स्वयं व्यञ्जकरूपैरेकीभवन्ति । एवं यथा मनसि भगवतो ब्रह्मादीनां च रूपाणि सन्ति तथा मनोविषयेष्वपि तानि सन्ति । तत्र कदाचिल्लीलया विषयस्थानि रूपाण्ययस्कान्तोऽयःशकलमिव मनः स्वाभिमुख्येन तत्र तत्र भ्रामयन्ति । मनःस्थानि च रूपाणि मनसा सहैव तदानुकूल्येन तत्र तत्र भ्रमन्ति । अत एव श्रवणसमये मनसाऽन्यन्मा स्मरेत्यार्यैर्बोधिताः प्रतिवक्तारो भवन्ति । तत्तद्विषयगतं सौन्दर्यादिकमेव



बलात्तत्र तत्र मन्मनो भ्रामयति तत्राहं किं कुर्व इति । कदाचित्तु मनःस्थान्येव रूपाणि यथा बहुकालाद्गृहमागतमतिप्रियं बन्धुं निरीक्षितुं वेगाद्गृहाद्बन्ध्वन्तरं स्वयमेव गच्छति तथा विषयस्थानि स्वरूपाणि द्रष्टुं स्वयमेव तत्र तत्र गच्छन्ति । गत्वा च तान्यालिङ्ग्य पुनरावर्तन्ते । एवमेव ब्रह्मादिरूपाण्यपि ।

एवं मनःस्थोऽनिरुद्धः प्रतिक्षणं कामाद्यनेकविकाराण्युत्पाद्य तदात्मकस्वरूपाण्यपि भुङ्क्ते । तथा तद्द्वारा विषयगतानि तथा तत्तद्गतरमाब्रह्मादिरूपाण्यपि भुङ्क्ते । तत्तद्गतस्वस्वरूपभोग एव रमाब्रह्मादिरूपभोगो नाम । एवं रमाऽपि वृत्तिस्थानि स्वस्वस्थानि स्वस्वरूपाणि भुक्त्वा तद्द्वारा विषयस्थानि रूपाणि भुङ्क्ते । तथा तत्तद्गतब्रह्मादिरूपाण्यपि । रमाया अपि तत्तद्गतस्वस्वरूपभोग एव ब्रह्मादिरूपभोगो नाम । एवमेव ब्रह्मादिष्वप्यनुसन्धेयम् ।

एवं भगवान्स्वयं स्वभोग्यं भुक्त्वा रमादिपुष्करान्तेभ्यस्तत्तद्योग्यं दत्वोर्वरितं जीवमनोगोचरं तस्मै प्रयच्छतीति । अत्र यद्यपि सर्वे देवाः सर्वव्यापारनिर्वाहकास्तथाऽपि क्वचित्कचिद्व्यापारविशेषनिर्वाहकाश्च भवन्ति । तथा हि । मनस्यहमिति ममेति वृत्तिद्वयप्रेरको रुद्रः । स्थूलविषये मनःप्रेरकाश्चन्द्रेन्द्ररुद्रवरुणाः । तत्र यज्ञादिकर्मणि चन्द्रेन्द्रौ । वापीकूपतटागादिनिर्माणे वरुणः । सूक्ष्मविषये मनःप्रेरका ब्रह्मवायुशेषशिवगरुडाः । तत्र ज्ञानभक्त्यादौ ब्रह्मा मुख्यवायुश्च । शेषो व्याख्याने । शिवो मनने । गरुडो ध्याने । तथा वेदश्रवणे गरुडः । पञ्चरात्रश्रवणे शेष इत्यादीनि ।

मनसि भगवदुपासकेनायतनं प्रतिष्ठा रहस्यं नाम तत्प्रवृत्तिनिमित्तं चेति चतुष्टयं खल्ववश्यं ज्ञेयम् । तत्र मनःस्थितस्यानिरुद्धस्य मन एवायतनम् । तत्रस्था रमा प्रतिमा प्रतिष्ठेति यावत् । आनन्द इति रहस्यं नाम । आनन्ददातृत्वं तत्पदप्रवृत्तिनिमित्तम् । अत एवायं पुरुषो मनसा स्त्रियमभिकाङ्क्षति । स्त्रियं गच्छत्यथ पुत्रो जायते स पितुरानन्दं प्रयच्छतीति । यदा

बिम्बरूपी हरिः श्रोत्रेन्द्रियेण शब्दाख्यानरूपान्भोक्तुमिच्छति तदा बिम्ब-श्रोत्रेन्द्रियस्य वासुदेवस्य ब्रह्मादिदेवताधिष्ठितजीवश्रोत्रेन्द्रियद्वारा बाह्य-श्रोत्रप्रवेशो भवति ततो बिम्बश्रोत्रेन्द्रियस्य वासुदेवस्य बाह्यश्रोत्रेन्द्रियस्थितेन वासुदेवेनैकीभावः । तथा ब्रह्मादीनां च बाह्यश्रोत्रस्थितैः स्वस्वरूपैरेकी-भावः। जीवस्वरूपश्रोत्रेन्द्रियस्य तु बाह्यश्रोत्रेन्द्रियेण मिश्रीभावः । अथ शब्दानुभवः । इयमेव प्रनाडिकाऽन्यत्राप्यनुसन्धेया ।

शब्दा द्विविधा वर्णात्मका ध्वन्यात्मकाश्चेति । तत्रोभयत्रापि तत्तच्छब्द-वाच्यानि भगवद्रूपाणि सन्ति । श्रीहरेर्वासुदेवाख्येन श्रोत्रेन्द्रियेण ग्राह्याणि विषयरूपाणि सुखप्रदानि । एवं तत्तत्प्रकाश्यगुणक्रियावृत्त्यादिरूपाणि यानि रूपाणि तानि मनसाऽनुभवन्ति । अत्र वर्णात्मकाः शब्दाः साक्षादेव गुणक्रियादीनि प्रकाशयन्ति । ध्वन्यात्मकास्तु तत्तद्वाचकवर्णव्यञ्जकत्वेन परम्परया । तथा हि । दधिमथनशब्दोऽन्तर्नादाख्यवर्णविशेषं व्यञ्जयित्वा तद्द्वारा हरेरन्यभीषकत्वं प्रकाशयति । गजशब्दोऽन्तर्नादवर्णवत्स्वरिताख्यं वर्णं व्यञ्जयित्वा तद्द्वारा हिङ्कारसहितं भीषकत्वं प्रकाशयति । एवं जलपूर्णमहामन्त्रशब्दः पादभूषाशब्दश्चस्वरितसहितान्तर्नादवर्णं व्यञ्जयित्वा हिङ्कारसहितं भीषकत्वमेव प्रकाशयतः । चकोरिशब्दो गृहगोधाशब्द आरण्यगोधाशब्दश्च कण्ठगतशब्दवत्प्रसिद्धवर्णं व्यञ्जयित्वाऽद्भुतत्वं प्रकाशयन्ति । नदीघोषो नादाख्यं वर्णं व्यञ्जयित्वा सर्वश्रैष्ठ्यं प्रकाशयति । समुद्रघोषो नादं व्यञ्जयित्वा सर्वस्माच्छ्रैष्ठ्यं हुङ्काराख्यं वर्णं व्यञ्जयित्वा पराभिभवशक्तिमत्त्वं च प्रकाशयति । अल्पो मेघशब्द ॐकाराख्यं व्यञ्जयित्वाऽतिशयिताधिकोच्चत्वं प्रकाशयति । भेरीशब्दोऽनुदात्ताख्यं वर्णं व्यञ्जयित्वौदार्यं प्रकाशयति । घण्टादिशब्दः स्वरिताख्यं वर्णं व्यञ्जयित्वाऽ-न्यनीचत्वं प्रकाशयति । स्वर्णचञ्चवादिशब्द उदात्ताख्यं वर्णं व्यञ्जयित्वोच्च-स्थितिं प्रकाशयति । श्वासादिशब्दो मन्द्राख्यं वर्णं व्यञ्जयित्वैकप्रकारतां प्रचयाख्यं वर्णं व्यञ्जयित्वा चाञ्चल्यं प्रकाशयति । एवमेवान्येऽपि



ध्वन्यात्मकाः शब्दात्मकाः शब्दा यथायथं गुणक्रियाकृत्यादीनि प्रकाश-यन्तीति । एवं रमामारभ्यावरतत्त्वदेवतापर्यन्तं तेषां देवानां तेषु पदार्थेषु रूपाणि सन्ति । तान्यपि शब्दनामकानि तानि सर्वाण्यपि भगवान् स्वीकरोति । तत्तद्गतस्वरूपभोग एव स्वीकरणम् । एवं भगवता स्वीकृतानि स्वस्वरूपाणि शब्दादीनि रमाद्याः स्वीकुर्वन्ति । चेतनाचेतनराश्यात्मकोऽयं शब्दः । तस्मिंश्च श्रोत्रदेशमागते तमागतं बन्धुमिवालिङ्ग्य स्वयोग्यं स्वयं भोग्यं भुक्त्वा लक्ष्म्यादिभ्योऽवरदेवतापर्यन्तेभ्यस्तत्तद्योग्यं दत्वोर्वरितं जीवेन्द्रिययोग्यं प्राकृतं तस्मै प्रयच्छति । तच्चोक्तम् । सर्वचेतनाधिष्ठितं जीवेन श्रुतं तत्सुखदं भवति । रूपादिचतुष्टयेऽप्येवमेव भोगप्रकारोऽनुसन्धेयः ।

अत्र सर्वेषां देवानां सर्वप्रेरकत्वेऽपि विशिष्यप्रेरकत्वं चास्ति । तथा हि । अत्र वेदश्रवणे श्रोत्रप्रेरकश्चन्द्रः । षडङ्गश्रवणे वरुणः । स्मृतितन्त्रश्रवणे प्रेरको यमः । कामशास्त्रश्रवणे मित्रः । नीतिशास्त्रश्रवणे कुबेरः प्रेरक इत्यादि । अत्र चन्द्रो वरुणादयश्चत्वारो दिग्देवताश्च श्रीहरेः श्रोत्रेन्द्रियेण जातत्वादेकेन रूपेण तत्र स्थित्वा स्वपित्रा वासुदेवेन प्रेर्यमाणे षडङ्गश्रवणादितत्तद्व्यापारे सेवायै साहाय्यमाचरन्ति । रूपान्तरेण तु बहिः स्थित्वा श्रोत्रं पितरं परिचरन्ति । तत्र श्रोत्रविषयत्वाय नानाविधसञ्जात शब्दगमनार्थमवकाशं वरुणादयश्चत्वारो दिग्देवताः प्रयच्छन्ति । अप्राकृताकाशभागत्वाद्दिशाम् । चन्द्रमास्तु श्रवणादौ शुक्लपक्षादिकाल-विशेषाख्याङ्गविवेचकः । शुक्लपक्षादिकालो मुख्यप्राणादिनियम्य इत्यनु-सन्दधीत । तत्रानुष्ठितश्रवणादेर्महाफलहेतुत्वादिति ।

अत्र श्रोत्रे वासुदेवोपासने श्रोत्रमायतनं रमा प्रतिष्ठाऽनन्त इति रहस्यं नाम । सर्वव्यापितयाऽनन्तत्वं तत्पदप्रवृत्तिनिमित्तम् । दिशामनन्तत्वाद्धि तत्स्थितं भगवद्रूपमप्यनन्तं तदेव श्रोत्रस्थमेति । बिम्बस्य यदा रूपात्म-भोगेच्छा जायेत तदा बिम्बवामदक्षिणचक्षुषोरनिरुद्धप्रद्युम्नयोर्बाह्यचक्षुःस्था-निरुद्धप्रद्युम्नाभ्यामेकीभावादि प्राग्वत् । चक्षुर्योग्यरूपादिभोगप्रकारोऽपि

प्राग्वदेव । चक्षुःस्थावनिरुद्धप्रद्युम्नौ चेत्थं ध्येयौ । कं पिबन्नालसम्बन्धि-नलिनायतलोचनौ सर्वेषां समत्वात्सामनामानौ ज्ञानरूपत्वादृङ्नामानौ याज्यस्वरूपत्वाद्यजुर्नामानौ सर्वेषामुत्थापकत्वादुक्थनामानौ सर्वपापोज्झि-तत्वादुन्नामानौ वाणीप्राणाभ्यां सर्वदा सर्ववेदैः स्तूयमानौ चातिदी-प्तत्वादिन्धनामानौ पारोक्ष्येणेन्द्र इत्याहूतौ दिव्यदृष्टिगोचरौ विशेषेण राजनाद्विराणणामकरूपाभ्यां सहितौ संयन्ति वामानि भद्राण्यस्येति संयद्वामनामानौ समस्तपदार्थैरसङ्गौ चासङ्गभगवत्स्थानत्वादेव हीदं चक्षुः सर्वैरुदकादिभिरसङ्गं भवतीति । तत्र वामाक्षिस्थस्य भगवतोऽनिरुद्धस्य वामानि वामं सौन्दर्यं तत्प्रधानत्वात्स्त्रीकदम्बानि नयति प्रेरयतीति वामनिरिति नाम । दक्षिणाक्षिस्थस्य प्रद्युम्नस्य भामनिरिति नाम । भाममोजस्तत्प्रधान-त्वात्पुरुषजातानि नयतीति । एवमुक्तप्रकारेणानिरुद्धप्रद्युम्नज्ञानिनः सर्व-पापालेपः सर्वमङ्गलप्राप्तिरिहामुत्र च बहुस्त्रीभोगो बहुसेवकसम्पत्तिश्च भवतीति फलम् ।

अत्र श्रीहरेश्चक्षुरिन्द्रियेण जातौ द्यौरादित्यश्चेत्येतावेकेन रूपेण तत्रैव स्थित्वा सेवायै साहाय्यमाचरतो रूपान्तरेण तु बहिः स्थित्वा चक्षुः पितरं च परिचरतः । तत्र वृष्ट्यादिकं दृष्ट्वा पिता प्रीतः स्यादिति दर्शनाख्यभोगार्थं द्युलोकाभिमानी वृष्ट्यादिकं प्रयच्छति ।

प्रकाशाभावे कथं तस्य शुक्लनीलादिरूपाणां वा घटपटादिद्रव्याणां वाऽन्येषां सर्वेषां चक्षुर्दर्शनयोग्यवस्तूनां वा दर्शनं स्यादित्यादित्यः प्रकाश-यतीति । चक्षुष्यनिरुद्धप्रद्युम्नविश्वानामुपासने चक्षुरायतनं रमा प्रतिष्ठा सत्य इति रहस्यं नाम । चक्षुषा दृष्टस्यैव सत्यतया सर्वसम्मतत्वात् । अत एव हि चक्षुषा पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिमं तत्सत्यं भवतीति ।

एवं दक्षिणाक्षिगोवत्सोपासनमवश्यं कार्यम् । तथा हि । भगवान् लीलया भक्तानुग्रहार्थमेवम्भूतः शरीरेऽस्ति । यथा लोके कस्यचिद्धनिकस्यैक-



मतिविस्तृतं गृहं तदन्तः सङ्कुचितमेकं तत्राप्येकं तत्राद्ये गा बध्नात्यन्य-स्मिन्वत्सान्वत्सानां बन्धने योग्यं शङ्कुर्दाम च । एव भगवानेव शङ्कु-र्लक्ष्मीर्दाम लिङ्गशरीरमेव सङ्कुचितस्थानं तदुपरि विद्यमानं स्थूलशरीरमेव विस्तृतं स्थानं वायुर्गोवत्सरूपेण तत्र वर्तते । एवम्भूतो गोवत्सो रात्रौ स्वस्थाने स्थितो दिवा स शङ्कुर्दामबद्धः सन्नेव दक्षिणाक्षिरूपं स्थानान्तरं गच्छति । तदा हि विलक्षणं गोवत्सं तृणादिभक्षणायागतमतिनूतनं वत्सं दृष्ट्वा यथा लालयन्ति लोकाः । तथा हर्याज्ञया वागादिस्थानेषु प्रेरणायास्थिता भारत्यादयोऽष्टौ देवा रूपान्तरं तत्र निधायागतास्तमाप्य पुनस्तत्रैव स्थिता मोक्षार्थं शिशुमुपासते ।

कमुदकं शयानैव पिबतीति कश्यपनाम्नी पृथ्वी चक्षुर्गतोदक-गमनमार्गेऽधरभागे स्थित्वा सस्थूणं सदा मानं शिशुमुपास्ते । अत्तृत्वा-दत्रिनाम्न्योमोपरिभागस्थोदकमार्गे स्थित्वोपास्ते । वृष्ट्या वाजमन्नं भरेद्वर्धयतीति भरद्वाजनामा पर्जन्योऽक्षिगतोदके स्थित्वोपास्ते । स्वप्रकाशेन विश्वस्य ज्ञानं जनयित्वा सन्तोषकारित्वेन विश्वामित्रनामाऽदित्यश्चक्षुषि वर्तुलमण्डलमध्यस्थकनीनिकायां स्थित्वोपास्ते । अतिशयितज्ञानत्वेन गौतमनामाऽनिरुद्धोऽक्षिस्थरक्तरेखासु स्थित्वोपास्ते । जातमितमत्तीति जमदग्निनामाऽग्निर्यत्कृष्णं तत्र स्थित्वोपास्ते । वसतामुत्तमत्वाद्वसिष्ठनामेन्द्रः शुक्ले स्थित्वोपास्ते । भारती तु तस्य समीपे स्थित्वोपास्ते । एवं गोवत्सज्ञानेनेन्द्रियाभिमान्यसुरबाधो न भवति । यदा बिम्बस्य स्पर्शात्म-भोगापेक्षा तदा सङ्कर्षणाख्येन त्वगिन्द्रियेण ब्रह्मादिदेवाधिष्ठितेन जीवत्वगिन्द्रियमिश्रितेन बाह्यत्वगिन्द्रियेण सर्वान्स्पर्शसुखान्भुङ्क्ते ।

एवं यदा मधुरादिरसात्मकस्वरूपभोगेच्छा तदा सङ्कर्षणाख्येन रसनेन्द्रियेण जीवरसनेन्द्रियद्वारा रसान्भुङ्क्ते । यदा च नानाविध-गन्धात्मकभोगेच्छा तदा प्रद्युम्नाख्येन घ्राणेन्द्रियेण जीवघ्राणेन्द्रियाधिष्ठितेन गन्धान्भुङ्क्ते । अत्र श्रीहरेर्घ्राणेन्द्रियजातौ वाय्वन्तरिक्षावेकेन रूपेण तत्रैव

रूपान्तरेण बहिरपि स्थित्वा घ्राणं पितरं परिचरतः । तत्र भूतवायुराघ्राणाख्यभोगाय पुण्यगन्धमावहति । गन्धानयनाय वायुसञ्चारार्थमवकाशं ददात्यन्तरिक्षनामा विघ्नेश इति । अत्र सर्वत्र ज्ञानेन्द्रियैर्विषयभोगप्रकारः श्रोत्रेण शब्दभोगे दर्शितधियाऽनुसन्धेयः ।

अथ कर्मेन्द्रियैः क्रियाभोगप्रकारः । भगवान् जीवानां मोक्षदानाय साधनानि कारयितुं स्थूलशरीरं प्रदाय तस्य यदुत्सर्गतः शतसंवत्सरादिजीवनं तस्य मुख्यप्राणसत्त्वैकनिबन्धनतां च चकारेत्युक्तम् । तत्रैवं भगवदाज्ञया प्राणिनां प्राणधारणे प्रवृत्तस्य स्वान्तःस्थेन वासुदेवेन प्रेरितः स प्राणनायकस्य परमानुग्रहेण जीवतो जीवस्य कदाचिद्वासुदेवप्रेरितभारतीप्रसादान्मोक्षादिपुरुषार्थाशा जायते । पुरुषार्थापेक्षा वस्तुतत्साधनापरोक्षज्ञानादिसम्पादनाय कर्माणि कर्तुमुद्यतो भवति । तत्र पुरुषार्थसिद्धये यावन्ति कर्माणि कार्याणि तावतां समाप्तिपर्यन्तमखण्डया तत्पुरुषार्थस्मृत्या भाव्यम् । अन्यथा पुरुषार्थान्तरस्मृतौ तत्साधने प्रवृत्तौ चानुष्ठितसाधनानां वैफल्यमावश्यकपुरुषार्थासिद्धिश्च स्यात् । अतस्तत्पुरुषार्थविषयिणीमखण्डां स्मृतिं सङ्कर्षणप्रेरितो हरः प्रयच्छति । तया युक्तस्तु पुमान्सङ्कल्पादिपूर्वकर्माणि करोति ।

तत्रायं क्रमः । सामान्यतस्तावद्योग्यतानतिरेकेण प्रकृतोपयुक्तसर्वपदार्थविषयकं ज्ञानं पूर्वमावश्यकम् । तादृशं ज्ञानं च नारायणेन प्रेरितश्चन्द्रश्चेतनाख्येन मनसा जनयति । तच्च ज्ञानं बलाधीनम् । न हि दुर्बलेन गुरुसेवादिजं ज्ञानं सम्पादयितुं शक्यते । बलमन्नाधीनम् । अत्रात्तैव हि बली दृष्टः । अन्नमबधीनम् । वृष्ट्यादिनाऽन्नादिवृद्धेर्दर्शनात् । आपस्तेजोऽधीना घर्मात्स्वेदादिदृष्टेः । तेजांसि च स्वावस्थानायावकाशापेक्षाणीत्यतो नारायण प्रेरितोमाप्रेरणयाऽवकाशं ददात्याकाशः । तत्र यथावकाशं तेजांसि वसन्ति । तत्र सङ्कर्षणप्रेरितः पुरन्दरेन्द्रस्तेजांसि नियम्य तैरापः सृजति । ततः प्रद्युम्नप्रेरित आहङ्कारिकप्राणोऽद्भिरन्नं जनयति । ततोऽनिरुद्धप्रेरितः



कामपुत्रोऽनिरुद्धोऽन्नाद्बलमुत्पादयति । ततः श्रीवासुदेवप्रेरितः प्रवहः स्वाभिमन्यमानेन बलेन गुरुसेवादि कारयित्वा ज्ञानं सम्पादयति । एवं क्रमेण प्रकृतोपयुक्तसर्वपदार्थविषयिणि चन्द्राभिमन्यमाने ज्ञाने पूर्ववृत्तेऽथ कर्माणि कारयितुमनिरुद्धप्रेरितो वरुणो मनआख्येन मनसा मानसानुसन्धानरूपं ध्यानं ददाति ।

ततो वरुणप्रेरितध्यानेन संस्कारोद्बोधे सति पूर्वानुभूतपदार्थविषयिणीं खण्डां स्मृतिं वासुदेवप्रेरितोऽग्निश्चित्ताख्येन मनसा जनयति । ततोऽग्नि प्रेरणया कर्तव्याकर्तव्यस्मृतौ सत्यामकर्तव्यं त्याजयित्वा कर्तव्य एव विषयेऽनिरुद्धप्रेरितो मित्रो मनआख्येन मनसेदमहं करोमीति सङ्कल्पं ददाति । एवं मित्रप्रेरणया कस्मिंश्चित्कार्ये सङ्कल्पिते प्रद्युम्नप्रेरितः पर्जन्यः कस्मिंश्चिद्देशे काले कैः साधनैरिदं साधयामीति विचारपूर्वमस्मिन्देशे काले एतैः साधनैः साधयामीति बुद्धिजं निश्चयं ददाति । ततो वासुदेवप्रेरिताऽग्निभार्या स्वाहा वागिन्द्रियं प्रेरयित्वाऽस्मिन्देशेऽस्मिन्काले एतैः साधनजातैरिदमहं करोमीति शब्दजातं यथानिश्चयमुच्चारयति मन्त्रादिकमप्यध्यापयति । ततोऽश्विभार्योषा प्रद्युम्नप्रेरिता शब्दैरर्थान्प्रकाशयति । अथाप्यं पुरुषः कर्माणि करोति । अत्रोषामारभ्यप्राणपर्यन्तं पञ्चदशदेवानामुषा स्वाहोत्तमा तस्याः पर्जन्य इत्यादिरूपेण पूर्वपूर्वेषामुत्तमोत्तमत्वं ज्ञेयम् ।

उक्तदिशा पूर्वपूर्वप्रेरणामन्तरेणोत्तरोत्तरेषां कार्यासिद्धेः । एवं क्रमेण भगवदिन्द्रियच्छुरितस्वस्वरूपेन्द्रियच्छुरितैः पञ्चभिरपि कर्मेन्द्रियैर्भगवत्पूजात्मकान्येव कर्माणि कृत्वा कर्मभिः शुद्धान्तःकरणस्य पूर्वापेक्षया विशेषज्ञानं चन्द्रो ददाति । ततः प्रवहो युक्तिभिर्विचार्य युक्तिजन्यनिर्णयं प्रयच्छति । ततस्तादृशनिर्णयजन्यां रतिमनिरुद्धो ददाति । ततो रत्या जायमानां विषयालम्बुद्धिरूपां तृप्तिलक्षणामाहङ्कारिकप्राणः प्रयच्छति । ततः पुरन्दरेन्द्रः प्रतिभामस्थिरां ददाति । तत उमा तामेव प्रतिभां स्थिरां ददाति । ततो महारुद्रो ज्ञानरूपामखण्डां स्मृतिं प्रयच्छति । ततो भारती जीवानां

स्वयोग्यभगवदपरोक्षज्ञानं जनयति । ततो मुख्यप्राणः प्रकृष्टसुखरूपस्वस्वरूपानन्दाविर्भावलक्षणां मुक्तिं प्रयच्छति । अत्र देहे तत्त्वानामभिव्यक्तिरधमाधमक्रमेणैव भाव्येति सिद्धत्वात्प्रथमं ज्ञानम् । ततो युक्तिजन्यो निर्णय इत्यादिरूपेणापरोक्षान्तस्य तत्त्वजातस्याधमाधमक्रमेणैवाभिव्यक्तिर्भवति । अत एव विज्ञानाद्यभिमानिनां चन्द्रादीनां पूर्वपूर्वमभिव्यक्तिः प्राणादीनामुत्तरोत्तरमिति ।

तत्र यदा बिम्बस्य व्याहरणक्रियाख्यस्वस्वरूपभोगेच्छा जायते तदा नारायणाख्यबिम्बस्य चेतनापरपर्यायमन्तःकरणं ब्रह्मादिदेवताधिष्ठितं जीवस्वरूपचेतनापरपर्यायान्तःकरणद्वारा बाह्यचेतनाख्यमन्तःकरणं प्रविश्य तत्रस्थेन नारायणेनैकीभूय प्रकृत कार्यकरणोपयुक्तं सर्वपदार्थज्ञानं जनयति । तन्नियमनाय च बिम्बचेतनाभिव्यक्तं नारायणाख्यं तादृशमेव ज्ञानं सर्वदेवताधिष्ठितमपि विशेषतश्चन्द्राधिष्ठितजीवस्वरूपचेतनाभिव्यक्ततादृशस्वरूपज्ञानद्वारा तत्र तिष्ठति । अथानिरुद्धाख्ययुक्तदेवताधिष्ठितं बिम्बमनो जीवस्वरूपमनोद्वारा बाह्यं मनः प्रविश्य तत्रस्थानिरुद्धेनैकीभूय पूर्वानुभूतार्थं संस्कारोद्बोधक्षमं मनसाऽनुसन्धानरूपं ध्यानं जनयति । तथा बिम्बमनः प्रादुर्भूतमनिरुद्धाख्यमुक्तरूपं ध्यानं विशेषतो वरुणाधिष्ठितं जीवस्वरूपभूतध्यानद्वारा तत्र स्थित्वा तन्नियमयति । एवं वरुणाधिष्ठितेनानिरुद्धाख्यध्यानेन संस्कारोद्बोधे सति वासुदेवाख्यबिम्बचित्तमुक्तदेवताधिष्ठितं जीवचित्तद्वारा बाह्यचित्तं प्रविश्य तत्रस्थेन वासुदेवेनैकीभूय कर्तव्याकर्तव्यविषयिणीं खण्डां स्मृतिं जनयति ।

तथा बिम्बचित्ताभिव्यज्यमाना वासुदेवस्योक्तरूपा स्मृतिर्विशेषतोऽग्निमधिष्ठाय तन्नियमनाय जीवचित्ताभिव्यक्तोक्तरूपस्मृतिद्वारा तत्र तिष्ठति । एवमग्न्यधिष्ठितवासुदेवप्रेरणया कर्तव्याकर्तव्यस्मृतौ सत्यां पुनरनिरुद्धाख्यबिम्बमनो ब्रह्मादिदेवताधिष्ठितं जीवं मनोद्वारा बाह्यं मनः प्रविश्य तत्रस्थेनानिरुद्धेनैकीभूयाकर्तव्यं विहाय कर्तव्य एव विषये इदमहं करोमीत्यादि



रूपसङ्कल्पं जनयति । तथा बिम्बमनोभिव्यक्तोऽनिरुद्धाख्यः सङ्कल्पो विशेषेण मित्राधिष्ठितस्तन्नियमनाय जीवमनोभिव्यक्तसङ्कल्पद्वारा तत्र तिष्ठति । तथा मित्राधिष्ठितोऽनिरुद्धः पूर्वभाविनीं देशकालसाधनादिविषयिणीं जिज्ञासां मनसा जनयति । ततः प्रद्युम्नाख्या बिम्बबुद्धिर्देवताधिष्ठिता जीवबुद्धिद्वारा बाह्यबुद्धिं प्रविश्य तत्रस्थेन प्रद्युम्नेनैकीभूयास्मिन्देशेऽस्मिन्काले एतैः साधनैरिदमहं करोमीत्यध्यवसायं जनयति । तथा बिम्बबुद्ध्यभिव्यक्तः प्रद्युम्नाख्योऽध्यवसायो विशेषतः पर्जन्याधिष्ठितस्तन्नियमनाय जीवबुद्ध्यभिव्यक्ताध्यवसायद्वारा तत्र तिष्ठति । ततो वासुदेवाख्यबिम्बवागिन्द्रियं देवताधिष्ठितमपि विशेषतः स्वाहाधिष्ठितं जीववागिन्द्रियद्वारा बाह्यवागिन्द्रियं प्रविश्य तत्रस्थेन वासुदेवेनैकीभूय सत्स्वपि सर्वेषु देवेषु विशेषेण स्वाहां निमित्तीकृत्यास्मिन्देशेकाले एतैः साधनैरिदमहं करोमीत्यादिरूपं शब्दजातं यथाध्यवसायमुच्चारयति ।

अथायं पुरुषः साध्वसाधु वा लौकिकं वैदिकं वा सकलमपि शब्दजातं व्याहरति । तत्र या व्यवहरणाख्याः क्रियास्ता एव वागिन्द्रियस्य विषयास्तत्र च तत्तन्नामात्मकानि वासुदेवस्य देवानां च रूपाणि श्रीहरेर्वागिन्द्रियस्य विषयभूतानि सन्ति । तत्तद्भोगप्रकारस्तु वागिन्द्रियस्थितवासुदेवस्य ब्रह्मादि देवसमूहस्य च ज्ञानेन्द्रिययोर्विषयभोगप्रकारवदेवानुसन्धेयः । एवमुत्तरत्र कर्मेन्द्रियचतुष्टयेऽपि तत्तदिन्द्रियविषयीभूतानि तत्तत्क्रियात्मकानि व्यापाराण्येव भुङ्क्ते भगवान् । ब्रह्माद्या अपि तथैव । विशेषं तत्र तत्रैव प्रदर्शयिष्यामः ।

तथा व्याहरणक्रियाभिमुखे ध्वन्यात्मकाः शब्दाः जायन्ते । तत्र च तत्तन्नामकानि भगवतो देवानां च रूपाणि व्यक्तीभवन्ति । ध्वनयश्च वर्णात्मकान् शब्दान्व्यञ्जयन्ति । तत्रापि तन्नियामकानि भगवतो देवानां च रूपाण्यभिव्यज्य तत्तद्वाच्यानि सन्तिष्ठन्ति । तथा हि । विष्णवे नम इत्यादौ "व" इति पूर्ववर्णे वराहो वासुदेवश्च "ण" इत्युत्तरवर्णे वामनः सङ्कर्षणश्च

''ष्णु'' इति संहितायां नृसिंहः प्रद्युम्नश्च । तथा लक्ष्मीनारायणात्मकम् । नारायणवाय्वात्मकं वायुसर्वदेवतात्मकं सर्वदेवताशङ्करात्मकं शङ्कर-ब्रह्मात्मकमित्यर्धनारीरूपपञ्चकं च तिष्ठति । तथाऽकारे विश्व उकारे तैजसो मकारे प्राज्ञो नादेऽनिरुद्धो बिन्दौ प्रद्युम्नो घोषे सङ्कर्षणः शान्ते वासुदेवोऽतिशान्ते नारायणः । तथा हिङ्कारसहिते वाक्ये प्रद्युम्नो मूर्त्यन्तर प्रतिपादकशब्दान्तरदर्शनपर्यन्तं तिष्ठति । एवमुत्तरत्रापि । आकारसहिते नारायणः । प्रसंयुते वराहः । उद्युक्ते नारायणः । प्रत्युक्तेऽनिरुद्धः । उपयुक्ते नृसिंहः । निरुक्ते सङ्कर्षणः । तथा संहितायां वराहः । पदे वामनः । क्रमे नृसिंहः । ऋग्वेदे वासुदेवः । यजुर्वेदे सङ्कर्षणः । सामवेदे प्रद्युम्नः । आथर्वणवेदे इतिहासपुराणेषु चानिरुद्धः । सर्ववेदेषु नारायणः । लौकिका लौकिकशब्दराशिघटकेषु पञ्चाशद्वर्णेष्वजादिपञ्चाशद्रूपाणि सूर्ये लीनत्वादर्क-लिनामकानि षष्ठ्युत्तरशतत्रयरूपाणि चेति । एवं वर्णात्मकाः शब्दाश्चेतना-चेतनात्मकप्रपञ्चसृष्टिस्थितिसंहारादौ प्रवृत्तानि तत्र तत्र स्थित्वा तत्तत्सत्तादि प्रदानि तत्तत्क्रियाप्रवर्तकानि तत्तदाकाराणि तत्तच्छब्दवाच्यानि भगवद्रूपाणि तथा तद्गुणान्कर्माणि च प्रकाशयन्ति । तान्येतानि सर्वाणि मनसाऽनुभवति भगवान् ।

यदा च बिम्बस्य ग्रहणेच्छा तदा वासुदेवाख्यं बिम्बपाणीन्द्रियं देवताधिष्ठितं जीवहस्तेन्द्रियद्वारा बाह्येन्द्रियं प्रविश्य तत्रस्थेन वासुदेवे-नैकीभूय हस्तसाध्यग्रहणादिव्यापारान्करोति । तत्र या ग्रहणादिरूपाः क्रियास्ता एव हस्तेन्द्रियाविषयास्तत्र तत्तन्नामकानि वासुदेवस्य देवतानां च रूपाण्यभिव्यक्तानि भवन्ति । तान्येव च बिम्बस्य हस्तेन्द्रियविषयाणि । तद्भोगप्रकारस्तु प्राग्वत् । यदा च बिम्बस्य गमनेच्छा तदा सङ्कर्षणाख्यं बिम्बपादेन्द्रियं देवताधिष्ठितं जीवपादेन्द्रियद्वारा बाह्यपादेन्द्रियं प्रविश्य तत्रस्थेन सङ्कर्षणेनैकीभूय गमनादिव्यापारान्करोति । ता गमनादिक्रिया एव पादेन्द्रियविषयाः । तत्र च बिम्बपादेन्द्रियविषयाणि तत्तन्नामकानि



सङ्कर्षणस्य देवानां च रूपाणि प्रादुर्भवन्ति । यदा च बिम्बस्य मलमूत्रादि विसर्गेच्छा तदा बिम्बस्य प्रद्युम्नाख्यं पाय्विन्द्रियं नारायणाख्यमुपस्थमिन्द्रियं च देवताधिष्ठितं जीवपायूपस्थद्वारा बाह्यपायूपस्थं प्रविश्य तत्रस्थाभ्यां प्रद्युम्ननारायणाभ्यामेकीभूय विशेषतोऽपानवायुद्वारा मलमूत्रविसर्गं कुरुतः । तत्र विसर्गक्रिया एव पायूपस्थयोर्विषयाः । तत्र मलविसर्गक्रियासु प्रद्युम्नस्य मूत्रविसर्गक्रियासु नारायणस्य देवानां च रूपाणि प्रादुर्भवन्ति । तान्येव क्रमाच्छ्रीहरेः पायूपस्थेन्द्रियभोग्यानि । यदा च बिम्बस्य स्त्रीसम्भोगेच्छा तदैव प्रतिबिम्बस्य जीवस्यापि तदिच्छा । यदा च श्रीहरिरुपमन्त्रणादिकं करोति तदा जीवोऽपि तत्करोति । हरेरुपमन्त्रणादिकं चानिरुद्धादि रूपाण्येव। तान्येव च देवताधिष्ठितानि जीवोपमन्त्रणादिद्वारा बाह्योप-मन्त्रणादिषु प्रविश्य तत्रस्थैरनिरुद्धरूपैरेकीभूयोपमन्त्रणादिप्रवर्तकानि । तत्र रन्तुं सम्भाषणरूपमुपमन्त्रणं सुखानुभवरूपं ज्ञापनं स्त्रिया सह शयनरूपं भार्याभिमुख्येन शयनं मैथुनकालस्तत्समाप्तिश्चेति पञ्चसु क्रमादनिरुद्धादि पञ्चरूपाणि ध्येयानि ।

तथाऽनिरुद्धादिरूपाण्येव हरेर्वेद्यादिकानि । तान्येवात्रात्मविद्यादि-स्थितानि । तत्र स्त्रीणामुपस्थो वेदिस्तत्रस्थानि लोमानि बर्हिः । तत्रस्थं चर्मैव कृष्णाजिनादिस्थानीयम् । तत्र तयोर्मध्ये दीप्तोऽग्नी रेतो होमस्थानीयो वर्तते । तौ मुष्कावेव सोमाभिषवणफलस्थानीयावित्यनुसन्धेयम् । तथा तत्र वासुदेवादिरूपैर्योनिकृत्यादिकं भगवतो जन्मत्रयं चानुसन्धेयम् । एवं रमणानन्तरं गर्भोत्पत्तौ भगवत्सन्निधानविशेषपात्रत्वात्परमादेरण सा सम्भावयितव्या । तथा पुत्रोत्पत्त्यनन्तरं कुमारोऽपि तथैव सम्भावनीयः । ज्ञानिनस्तदुभयसम्भावनं भगवत्सम्भावनैवेति । अत्र स्वाभाविकेषु जीवस्य ज्ञानेच्छादिगुणेषु क्रियासु च विष्णोर्ज्ञानेच्छादयो गुणाः क्रियाश्च प्रेरकत्वेन वर्तन्ते । तानेतान्स्वाभाविकान्गुणान्क्रियाश्च हेतुं कृत्वैव स्वेनैव तदा तदोत्पद्यमानेषु द्रव्येषु गुणेषु क्रियासु चान्तर्यामितया तत्प्रवर्तकतया

तत्तदाकारेण तत्तन्नाम्ना स्वस्य प्रादुर्भावः । तेषु नष्टेषु तद्रूपाणां च शक्त्यात्मना तिष्ठन्ति । तत्तन्नाशादिक्रियास्वपि नियामकान्यन्तर्गतानि रूपान्तराणि प्रादुर्भवन्ति । तदनधिष्ठितं किञ्चिदपि चेतनमचेतनं वा नास्ति । एवं रमाऽपि सर्वान्तर्गतैः स्वरूपैः श्रीहरिं पूजयति । एवं ब्रह्माऽपि सर्वान्तर्नियामकोऽनन्तरूपी । एवं वायुरप्यनन्तरूपी । एवीमतरेऽपि देवा यथायथमनन्तरूपैः श्रीहरिं पूजयन्ति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये इन्द्रियव्यापाराख्यनवमं प्रकरणम् ॥९॥*

## ॥ अथ तत्त्वकार्यप्रकरणम् ॥

॥ हरिः ॐ ॥ यद्यप्यस्य शरीरस्य सर्वतत्त्वात्मकत्वादत्र भवन्तः सर्वेऽपि व्यापाराः सामान्यतः सर्वतत्त्वात्मका एव । तथाऽपि वैशेष्येण तत्तत्तत्त्व-विशेषव्यापारास्तल्लक्षणानि तत्तन्नियामकानि भगवतो देवानां च रूप-विशेषाणि चावश्यं ज्ञेयानि । तथा हि । अव्यक्तमहदहङ्कारबुद्धीन्द्रिय-मनोमात्राभूतात्मकानि पञ्चविंशति तत्त्वानि । तत्राव्यक्तं सत्त्वरजस्तमो-गुणात्मकम् । तत्र सत्त्वकार्याणि शमो दमस्तितिक्षा तपः सत्यं दया स्मृतिस्तुष्टिस्त्यागो स्पृहा श्रद्धा ह्रीःक्षमाधृतिस्तुतिर्ज्ञानं सुखं जागरणं चेत्यादीनि । स्वच्छत्वं शान्तत्वं च सत्त्वस्य स्वाभाविको गुणः । तत्र सत्त्वं स्वच्छत्वाज्ज्ञानं जनयति शान्तत्वाच्च सुखमिति विवेकः । प्रकाशशक्तिः सत्त्वस्य स्वाभाविकी । अत एव पञ्चेन्द्रियैः प्रकाशः सत्त्वं ज्ञानं जनयित्वा तद्द्वारा जीवं बध्नाति । अत्र शमादिषु सर्वत्र तत्तन्नामकान्यनिरुद्धस्य रूपाणि नियामकानि ध्येयानि । तथा स्थूलशरीरसृष्टिप्रकरणोक्तानां तत्त्वदेवानां च रूपाणि ध्येयानि । एवमुत्तरत्रापि ।

रजःकार्याणि काम ईहा दमस्तृष्णा स्तम्भ आशीर्भिदाऽल्पदुःखमुत्साहो यशः प्रीतिर्धार्ष्ट्यं वीर्यं बलमुद्योगश्चाश्वल्यं श्रीःस्वप्नश्चेत्यादीनि । स्नेहजनकत्वं स्वाभाविकं तल्लक्षणम् । क्रियाशक्तिश्च रजसः स्वाभाविकी । अत एव पञ्चभिरिन्द्रियैः क्रिया रजस्तृष्णामुत्पाद्य तद्द्वारा कर्मभिर्जीवं बध्नाति । अत्र कामादिषु सर्वत्र नियामकतया स्थितानि कामादिनामकानि प्रद्युम्नस्य रूपाणि ध्येयानि । तमःकार्याणि क्रोधो लोभानृतं हिंसा कापट्यं दम्भोऽक्षमा कलहः शोको मोहो विषाद आर्तिर्निद्राऽऽशा भीरनुद्यमः प्रमादः सुषुप्तिश्चेत्यादीनि । अज्ञानमिथ्याज्ञानजनकत्वं तस्य स्वाभाविकं लक्षणम् । आवरणशक्तिश्च तमसः स्वाभाविकी । अत एव स्वप्रकाशजीवस्याप्यावरणम् । तमः प्रमादालस्यनिद्रां जनयित्वा तद्द्वारा जीवं निबध्नाति । अत्र क्रोधादिषु सर्वत्र नियामकानि सङ्कर्षणरूपाणि ध्येयानि ।



अथ मिश्रितगुणकार्याणि । धर्मार्थकामादिषु निष्ठा श्रद्धादिः स्वधर्मा-चरणामित्यादीनि । अत्र सर्वत्रानिरुद्धादित्रयाणां रूपाणि नियामकानि ध्येयानि । यद्यपि पूर्वोक्तानि शमादीन्यपि मिश्रितगुणकार्याण्येव तथाऽपि तत्र सत्त्वादीनां गुणप्रधानभावेन मिश्रितत्वाद्वैशेष्येण शमादीनि तद्गुणकार्या-णीत्युच्यन्ते । तानि पुनः समप्रधानभावेन मिश्रितगुणकार्याणीति भेदः । अत एव रजस्तमसा प्रतिबद्ध्य कदाचित्सत्त्वमात्रात्केवलं ज्ञानसुखपरम्परा जायते । कदाचित्तमःसत्त्वे प्रतिबद्ध्य रजोमात्रात्केवलं तृष्णासङ्गद्वारा कर्मपरम्परा । कदाचिद्रजःसत्त्वे प्रतिबद्ध्य तमोमात्रात्केवलप्रमादालस्य निद्रादिपरम्परेति । सत्त्वादिगुणत्रयं द्वेधा स्थूलं सूक्ष्मं चेति । तत्र सूक्ष्मे सत्त्वगुणाद्भगवज्ज्ञानजनकभक्त्यादिकं जायते । रजसस्तु भगवत्पूजात्मकानि कर्माणि । तमसो भगवद्विषयेऽज्ञानमिथ्याज्ञानादिकम् । तत्राद्यद्वयेऽधि-कारिण आकाङ्क्षादियुक्ता । अन्ते तु द्वेष एव युक्तः । स्थूलाद्गुणत्रयाच्च भगवदतिरिक्तविषयकं ज्ञानं कर्म मिथ्याज्ञानादिकं च भवति । तच्च भगवदिच्छया संस्कारकर्मादिकं निमित्तीकृत्य प्राप्तं निवृत्तं वा यो न द्वेष्टि न काङ्क्षति स एव गुणातीत इत्युच्यत इति ।

महत्तत्त्वे सत्त्वांशानां बाहुल्येन विद्यमानत्वाज्ज्ञानप्रधानं महत्तत्त्वम् । चित्तं महत्तत्त्वकार्यम् । चित्तेन स्थिरा स्मृतिर्जायते । स्वच्छत्वमविकारित्वं

शान्तत्वं च चित्तस्य स्वाभाविका गुणाः । तत्र स्वच्छत्वं निर्मलत्वमविकारित्वं स्तिमितोदकवदत्यल्पक्रियावत्त्वं शान्तत्वं प्रसन्नत्वम् । अत्र सर्वत्र वासुदेवस्य रूपाणि ध्येयानि । अहङ्कारतत्त्वे रजोंऽशानां बाहुल्येन विद्यमानत्वात्क्रियाप्रधानकमहङ्कारतत्त्वम् । तत्त्रिविधं वैकारिकतैजसतामसभेदात् । वैकारिकादित्रैविध्ये च शान्तत्वादिव्यञ्जकानां सत्त्वादिगुणानां व्यतिकरविशेषादिति द्रष्टव्यम् । वैकारिकाहङ्कारस्य मनोरूपेण परिणतत्वान्मनोव्यापित्वेन देहाद्यहंममतोत्पादकत्वेन कर्तृत्वं नाम तस्य लक्षणम् । तैजसाहङ्कारकारणकानामिन्द्रियाणां करणत्वादिन्द्रियाभिमानिनियतेन्द्रियद्वारा ज्ञानजनकत्वेन करणत्वं तैजसाहङ्कारलक्षणम् । तामसाहङ्कारकारणकानां पञ्चभूतानां कार्यापरपर्यायदेहाकारेण परिणतत्वात्कार्यत्वं तामसाहङ्कार लक्षणम् । एवं शान्तत्वं वैकारिकस्य । तत्कार्ययोर्देवपित्रोर्भगवन्निष्ठोपेतत्वादिरूपस्य शान्तत्वस्य दर्शनात् । तैजसस्यं तु घोरत्वं तत्कार्येष्विन्द्रियेषु घोरपदार्थविषयकज्ञाननानाविधघोरकर्मजनकत्वस्य दर्शनात् । तामसाहङ्कारस्य मूढत्वम् । वैकारिकतैजसयोर्यावत्प्रकाशादिस्वस्वकार्यजनकत्वं तावता तामसाहङ्कारकार्ये देहादावसत्त्वात् । अत्र सर्वत्र नियामकानि सङ्कर्षणरूपाणि ध्येयानि ।

बुद्धितत्त्वकार्याणीन्द्रियैर्द्रव्यस्फुरणे सति जायमानं विशेषज्ञानं स्थिरसंशयो विपर्ययो निश्चलश्चञ्चला स्मृतिरज्ञानं चेत्यादीनि । तत्रेन्द्रियैर्द्रव्यस्फुरणरूपं यत्सामान्यं ज्ञानं तन्मनोजम् । अत्र प्रद्युम्नस्य रूपाणि ध्येयानि । इन्द्रियाणि द्विविधानि ज्ञानक्रियाभेदात् । तत्र ज्ञानेन्द्रियप्रेरकत्वाज्ज्ञानशक्तिर्बुद्धेरुमायाः । कर्मेन्द्रियप्रेरकत्वात्क्रियाशक्तिराहङ्कारिकप्राणस्य । तत्रस्थस्य नभोविशेषगुणविषयस्तदिन्द्रियं श्रोत्रम् । वायुविशेषगुणविषयकमिन्द्रियं त्वगित्यादिरूपेणेन्द्रियाणां लक्षणानि ज्ञेयानि । इन्द्रियेषु चोक्तानि रूपाणि ध्येयानि ।

अथ मनस्तत्त्वकार्याणि । सङ्कल्पो विकल्पो नानाविधः कामश्चञ्चलः संशयश्चेत्यादीनि । अत्र सर्वत्रानिरुद्धस्य रूपाणि ध्येयानि ।



अभिधेयैकनिष्ठत्वं भगवज्ज्ञापकत्वमाकाशैकनिष्ठत्वं चेति त्रयं शब्दमात्रस्य लक्षणम् । शब्दो द्विविधो वर्णात्मको ध्वन्यात्मकश्चेति । तत्राद्यो नित्यो द्वितीयो भूताकाशोपादानकः । जीवानां गमनाद्यर्थमवकाशदातृत्वं बहिरन्तर्दिगादिरूपत्वं प्राणापानादीनामिन्द्रियाणां जीवानामावासस्थानत्वं चेति त्रयमाकाशस्य स्वाभाविकं लक्षणम् । अत्र सर्वत्र वासुदेवस्य रूपाणि । मृदुत्वं कठिनत्वं शीतत्वमुष्णत्वं वायुमात्रत्वं चेति पञ्चकं स्पर्शस्य स्वरूपलक्षणम् । चलनकारयितृत्वं पृथक्स्थितानामेकीकरणं सर्ववस्तुव्याप्तिः पर्णादिद्रव्यशब्दयोर्नेतृत्वं सर्वेन्द्रियान्तःस्थितत्वं चेति पञ्चकं वायोः स्वाभाविकं लक्षणम् । अत्र सर्वत्र सङ्कर्षणरूपाणि ध्येयानि ।

द्रव्याकृतित्वं प्रकाशित्वं व्यक्तित्वेन स्थितिरुग्रत्वं चेति चतुष्टयं रूपस्य स्वाभाविकं लक्षणम् । द्योतनं पाककरणं रसादनं भक्षणं हिमनिवारणं शुष्कीकरणं क्षुत्तृट्जनकत्वं चेति सप्तकं तेजसः स्वाभाविकलक्षणम् । अत्र सर्वत्र प्रद्युम्नस्य रूपाणि । भौतिकपदर्थानां विकारेण कषायमधुरतिक्तकट्वाम्लेत्याद्यनेकप्रकारेण रसो भिद्यते । न तु मतान्तर इव षाड्विध्यनियमः। आर्द्रीकरणं तर्पकत्वं चेष्टाहेतुत्वं सुखकरत्वं बिन्दुभावस्तापपरिहारकत्वमन्येभ्यो भूतेभ्यः कार्येष्वाधिक्यं चेत्यष्टकमपां स्वाभाविक लक्षणम् । अत्र सर्वत्रानिरुद्धरूपाणि ।

गन्धः स्वयमेकोऽपि द्रव्यावयववैषम्यात्करम्भः पूतिस्सौरभ्यं शान्तोग्राम्लकषायादिभेदादनेकधा भिद्यते । तत्र दग्धपार्थिवविषयकः करम्भः । क्लिन्नक्षतविषयः पूतीति । मिश्रगन्धः शान्तस्त्वचादिविषय उग्रः । आरनालादिविषय आम्लः । हारीतक्यादिविषयः कषाय इत्यादि । भावनं ब्रह्मस्थानत्वं धारणत्वं सद्विशेषणत्वं सर्वसत्त्वगुणोद्भेदश्चेति पञ्चकं पृथिव्याः स्वाभाविकं लक्षणम् । तत्रोत्पादकत्वं भावनं पार्थिवशरीरे ब्रह्मदर्शनाद् ब्रह्मणः स्थानत्वं ब्रह्मस्थानत्वं मूर्तद्रव्याधारकत्वं धारणत्वं भूतत्रयमपेक्ष्य विशेषेण व्यक्तत्वं सद्विशेषणत्वं सर्वप्राणिशरीरेषु सर्वगुणव्यञ्जकत्वं

सर्वसत्त्वगुणोद्भेदः । अत्र सर्वत्र नियामकतया नारायणस्य रूपाणि ध्येयानि । अत्र यद्यपि पृथिव्यादिषु पञ्चसु गन्धाद्याः पञ्चगुणा नियतास्तथाऽपि पृथिव्यां चत्वारोऽप्सु त्रयस्तेजसि द्वौ वायावेकश्चेत्यन्ये गुणास्तु परान्वयादिति बोध्यम् ।

विष्णुर्देवाश्च शुभाशुभरूपस्य सर्वस्यापि प्रेरकाः । तत्र प्रेरका अपि पापानां न देवाः पापमाप्नुयुः प्रत्युत हर्याज्ञाकरणाद्धरिपूजेति चोद्देशात्पुण्यमेभिरवाप्यते । तत्र देवाः शरीरेन्द्रियस्वातन्त्र्याधिक्यतारतम्येन ब्रह्मपर्यन्तमुत्तरोत्तरमधिकं फलं स्वयमाप्य कर्तुर्जीवस्यापि योग्यतानुसारेण प्रयच्छन्ति । असुरास्त्वशुभमात्रस्य प्रेरका देवानामिवोद्देशाद्यभावात्तत्फलं दुःखं च शरीरेन्द्रियस्वातन्त्र्याधिक्यतारतम्येन कलिपर्यन्तमुत्तरोत्तरमधिकं प्राप्नुवन्ति । तत्र जन्मादिप्रयुक्तं दुःखं देहाभिमानिनोऽसुरस्य सुप्त्याद्यप्ययजं दुःखमिन्द्रियाभिमानिनोऽसुरस्य । क्षुत्तृडादिजन्यं दुःखं प्राणाभिमान्यसुरस्य । भयतर्षादिजन्यं दुःखं मनोभिमान्यसुरस्य । केवलमान्तरं दुःखं बुद्धिमान्यसुरस्य । नीचोऽस्मीत्याद्यनुसन्धानजन्यं दुःखमहम्मान्यसुरस्य । अतीतादिस्मृतिजन्यं दुःखं चित्तमान्यसुरस्य । तदेतत्सर्वं दुःखं समुदायतो जीवमान्यसुरस्य कलेरिति । एवं देहेन्द्रियादिष्वभिमानतो जीवस्यापि किञ्चिद्भवति ।

अत्र प्रक्रान्ते पुरुषयज्ञेऽशनायापिपासाजन्माधिभिर्व्याध्यादिभिश्च जायमाना कष्टावस्था दीक्षेत्यनुसन्धेया । स्वायम्भुवभार्या शतरूपा तदभिमानिनी । अशनं पानं सुखावस्था चेत्यादीनि यजमानव्यापाररूपोपसदसंज्ञकानि । हासताम्बूलादिभक्षणमैथुनगमनागमनशवनिर्हरणशवदाहादि सर्वव्यापाराणि स्तुतशस्त्रात्मकानीति जानीयात् । तत्र ऋक्षु सामगानं स्तोत्रं केवलं मन्त्रपाठस्तु शस्त्रमिति भेदः । कायक्लेशादिरूपं वेदाभ्यासादि रूपं चिन्तनरूपं च तपो विद्यादिदानमन्नादिदानं च मनोवाक्कायकरणवृत्तीनामेकाग्रतारूपमार्जवं निष्ठुरभाषणाभावरूपा वधाभावरूपा चाहिंसा सत्यवाक्त्वं चेत्येतत्सर्वं दक्षिणेत्यनुसन्धेयम् । तदभिमानी स्वायम्भुवो मनुरिति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये तत्त्वकार्याख्यं दशमप्रकरणम् ॥ १० ॥*



## ॥ अथ रथादिप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं श्रीहरिर्ब्रह्माद्या हरिदासाश्चेदं शरीरमधिष्ठायानेकधा विहरन्तः कदाचिल्लीलयेदं शरीरं रथं भावयित्वा विहरन्ति । प्रसिद्धरथे रथी राजा तत्समीपे चामरव्यजनादिभिः सेवां कर्तुं युवराजोऽश्वाश्चत्वारस्तद्बन्धनरज्जवस्तन्नियन्ता सारथिश्चेत्याद्याः सन्ति । अत्रापि ते सन्ति । तथा हि । भगवान् श्रीपतिर्हरिरेवथस्थो राजा । मुख्यप्राण एव तत्समीपे स्थित्वा चामरादिभिः सेवाकारी युवराजः । दक्षिणेऽक्षिणि सूर्यो वामेऽक्षिणि तद्भार्या संज्ञाऽस्ति । तावुभौ रथस्थाग्रभागे नियुक्ताश्वौ । तथा दक्षिणे श्रोत्रे चन्द्रो वामे श्रोत्रे तद्भार्या रोहिण्यस्ति । तावुभौ पश्चान्नियुक्ताश्वावेवञ्च चत्वारोऽश्वाः । वाक्स्थितोमैव नागाकारेणाश्वोद्धरणार्थं रज्जुर्भवति । मनःस्थितो महादेव एव तन्नियन्ता सारथिर्भवति । चक्षुःश्रोत्रविषया एवाश्वसञ्चारप्रदेशा इति । तथेदं शरीरं श्रीहरेर्वीणेति जानीयात् । प्रसिद्धा मानुषी वीणा त्वेतदनुकारिण्येव । तथा हि । यथा दैवीवीणायाः शिरस्तथा मानुषवीणायाः शिरो वर्तते । यथा दैवीवीणाया उदरं तथा मानुषीवीणाया अप्युदरस्थानीयमम्भृणम् । यथा च देववीणाया जिह्वा तथा मनुष्यवीणायाः शलाका । यथा च देववीणाया अङ्गुलयस्तथा मनुष्यवीणायास्तन्त्रयः । यथा च देववीणायाः कण्ठोत्थिता मञ्जुला घोराश्च ध्वनयस्तथा मनुष्यवीणायास्तन्त्रीकण्ठोत्थितास्तन्त्रीभेदेन मञ्जुला भेदाश्च ध्वनयः । यथा देववीणायाः कण्ठोत्थितध्वनिव्यङ्ग्याः स्वराः स्पर्शा अन्तःस्था उष्माणश्चेति वर्णास्तथा मानुषवीणाया अपि तन्त्रीकण्ठोत्थितध्वनिव्यङ्ग्याः स्वरादयो वर्णाः । यथा च दैवी वीणा लोमशेन चर्मणा पिहितैवं मनुष्यवीणाऽपि लोमशेन चर्मणा पिहितेति । अत्र न केवलं मम शरीरमेव दैवी वीणा किन्नाम ब्रह्मादिशरीरमपीत्यनुसन्दध्यात् ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये रथादिनामैकादशप्रकरणम् ॥ ११ ॥*

## ॥ अथ जाग्रत्प्रकरणम् ॥

॥ हरिः ॐ ॥ अथ भगवान् श्रीपतिर्बाह्यमृच्छिलाजलतूलदारुलोहाद्युपादानकैः सर्वप्राणिभिर्दृश्यमानैर्बाह्यप्रत्यक्षैर्बहुवित्तव्ययायाससाध्यैश्चक्रचीवरादिसामग्रीसमवधानसापेक्षै राजामात्यगुर्वाद्यनेकजनानुज्ञाधीनजनैर्बहुकाले वर्तमानैः पुनः पुनरुत्पादयितुमशक्यैः प्रतिक्षणं परिदृश्यमानवैचित्र्यशून्यैः संवृतदेशेष्ववकाशानर्हैर्घटपटाद्यनेकपदार्थसार्थैरधिष्ठानभूतैस्तत्तदधिष्ठितैस्तत्तत्पदार्थसत्ताप्रवृत्त्यादिप्रदैस्तत्तदाकारैस्तत्तच्छब्दवाच्यैः स्वस्वरूपैर्ब्रह्मादिदेवदानवस्वरूपैश्च विहृत्य कदाचित्तद्विपरीतस्वभावानुश्रवणदर्शनजनितमानसवासनामात्रोपादानकानि तैरदृश्यमानान्मनोमात्रगोचरान्दरिद्रेणाप्यनायासेनोत्पादयितुं शक्यान्राजादिशासनाविषयान्पुनः पुनरुत्पादयितुं शक्यान्संवृतदेशेऽप्यवकाशान्घटपटादिपदार्थान्सृष्ट्वा तानधिष्ठानीकृत्य तत्तत्सत्ताप्रवृत्त्यादिप्रदानाय तत्तदाकारेण तत्तन्नाम्ना तत्र तत्र स्थित्वा विहर्तुमिच्छति । तदैव च स्वमनःस्थितसंस्काराख्यान्यनिरुद्धरूपाणि देवताधिष्ठितानि । जीवमनःस्थसंस्कारद्वारा बाह्यमनःस्थसंस्कारान्प्रविशति तानुद्बोधयति च ।

ततो बिम्बरूपी हरिस्तानि संस्काराख्यानि स्वस्वरूपाण्युपादानीकृत्य तथा कालादृष्टाख्यानि स्वस्वरूपाणि निमित्तीकृत्य जीवप्रयत्नाधिष्ठितैः स्वप्रयत्नैरेव करितुरगादिपश्वाकाराणि सिंहव्याघ्रादिमृगाकाराणि मयूरकीरादि विहगाकाराणि मत्स्यकूर्मादिजलजाकाराणि सर्पकृमिकीटकाद्याकाराणि गङ्गायमुनादिनद्याकाराण्युद्यानादिवनाकाराण्याम्रपनसादिवृक्षाकाराणि सर्पवृश्चिकाद्याकाराणि नरनार्यादिमनुष्याकाराणि सुवर्णरजतादिलोहाकाराणि कटकमुकुटाद्याभरणाकाराणि व्रीहियवादिधान्याकाराण्यन्नपरमान्नादिरूपभोज्याकाराणि स्रक्ताम्बूलगन्धादिभोगद्रव्याकाराणि कौशेयादिवसनाकाराणि पाटलीपुत्रादिपुरग्रामाकाराणि भद्रसेनवीरसेनादिराजामात्याद्याकाराणि छत्रचामरादिराजोपचाराकाराणि रथादिचतुरङ्गबला-



कारण्यग्निहोत्रादिपुण्याकाराणि गोहननादिपापाकाराणि भूस्वर्गनरकादिलोकाकाराणि किं बहुना चेतनाचेतनात्मकसर्वपदार्थाकाराणि स्वस्वरूपाणि सृजति । सृजन्नपि बाह्यसंस्कारानुपादानीकृत्यादृष्टकालादिकं निमित्तीकृत्य जीवप्रयत्नैरुक्तरूपान्समस्तान्पदार्थान्सृष्ट्वा तत्सत्ताप्रवृत्त्यादिप्रदानाय तत्तन्नाम्ना तत्तदाकारेण तत्तदधिष्ठिततयैव सृजति ।

एवं जाग्रदवस्थायामेव संस्कारोपादानकान्पदार्थान्सृष्ट्वा जीवमनोद्वारा बाह्यमनःस्थितेनानिरुद्धाख्येन स्वमनसा तान्सर्वाननुभवति । अनुभवंस्तु कदाचित्काञ्च्यां त्रिभुवनतिलको भद्रसेनाख्यो राजा भवेयं तथा छत्रचामरादिनानाविधराजोपचारैः सेवकैर्भृत्यवर्गैर्देवमनोमोहिनीभिः सुन्दरीभिः परिकल्पितकामोपचारैश्च वृतोऽजातशत्रुरिच्छामृतिः सर्वविद्यासु निपुणो युवा रूपौदार्यवीर्याद्यनेकगुणगणमण्डितश्च भवेयमित्यादिरूपं मनोरथं करोति । कदाचिद्राजैवाहमस्मीदानीमुक्तानेक गुणगणमण्डितश्चास्मीत्यादिरूपं ध्यानं करोति । प्रतिबिम्बत्वात्तदुभयं जीवोऽपि करोति तथा कदाचित्सोपासनादिमनोरथं ध्यानं करोति । तदा जीवोऽपि तत एव तत्करोति । तथा कदाचित्कर्मानुसारेण जीवस्य सुखदुःखादिदानाय निर्दोषपूर्णानन्दोऽपीच्छया स्वयं सुखदुःखादिमानिव भूत्वा प्रतिबिम्बस्य जीवस्य सुखदुःखादिकं प्रयच्छतीति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये जाग्रदाख्यं द्वादशप्रकरणम् ॥ १२ ॥*

## ॥ अथ स्वप्नप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं जाग्रद्ध्यानमनोरथेषु भगवाञ्जीवप्रयत्नैरेव स्थूलास्थूलभेदभिन्नान्करितुरगादिनानाविधपदार्थान्निर्माय लीलया स्वयमपि तत्तन्नाम्ना तत्तदाकारेण तत्र तत्र प्रादुर्भूय बहुधा विहृत्याथेदानीं जीवप्रयत्नं विहायापि केवलं स्वेच्छैव संस्कारयोनीनर्थान्निर्माय नियामकतया स्वयमपि तेषु प्रादुर्भूय विहारं कर्तुमिच्छति । तथा जाग्रदवस्थायां सर्वैरपि ज्ञानेन्द्रियैः

प्रायोऽप्रियवस्तुविषयकज्ञानजननेन दुःखितं कर्मेन्द्रियैश्च क्षणकालमप्यविहाय नानाविधानि कर्माणि कृत्वाऽतिश्रान्तं जीवं दृष्ट्वा परमानुग्रहेण तस्यानन्ददानाय सुषुप्तिं प्रापयितुं जीवमादाय हृदयस्थानं गच्छन्मध्ये मार्गं कण्ठस्थानं प्राप्य तत्रैव किञ्चित्कालं स्थित्वा केवलात्मेच्छयैव संस्कारोपादानकान् करितुरगादिपदार्थान्निर्माय तत्सत्ताप्रवृत्त्यादिप्रदानाय स्वयमपि प्रादुर्भूय तत्प्रत्ययं जीवस्य प्रदाय विहर्तुं चेच्छति । अथ तदैव दक्षिणाक्षिस्थितो विश्वः श्रोत्रादिज्ञानेन्द्रियेषु वागादि कर्मेन्द्रियेषु शरीरे च तत्र तत्रावस्थितानि वासुदेवादिरूपाण्यादाय तैरेकीभूय तथाऽधिष्ठानभूतानि जीवरूपाणि चैकीकृत्य कण्ठस्थानं गच्छंस्तदन्तरे श्रोत्रादिभिर्बहिः शब्दादिज्ञानं जनयति जीवस्य । तैजसस्तु मनसा वासनोपादानकार्थज्ञानम् । सेयमुभयज्ञानशब्दितावस्थेत्युच्यते ।

कदाचित्तैजसः संस्कारयोनीन्रथान्मनसा दर्शयति । विश्वस्तु तदेव दर्शनं निमित्तीकृत्य वागादिभिः कर्मेन्द्रियैर्बाह्याः क्रिया जनयति । अत एव तदानीं व्याहरन्ति गृह्णन्ति गच्छन्ति विसृजन्ति मलमूत्रं चरमधातुं च जीवाः । तदेतत्सर्वमभ्याशस्थाः सर्वेऽपि पश्यन्ति सेयं ज्ञानकर्मोभयशब्दितावस्थेत्युच्यते । एवमुभावपि विहृत्याथ विश्वः कण्ठदेशं गच्छति । ततस्तत्र मनःस्थितेन तैजसेनैकीभवति । देवा अपि मनःस्थैर्देवैरेकीभवन्ति । ततस्तैजसस्त्रिगुणात्मन्यनादौ मनसि सतोऽनन्तानशेषार्थविषयकान् संस्कारान्दृष्ट्वा तत्रादृष्टकालानुसारेण ये फलदानायोद्बोधनीयास्तानेवोद्बोधयन्ति । उद्बोधयित्वा च तानुपादानीकृत्यादृष्टकालादिकं निमित्तीकृत्य केवलमात्मेच्छयैव करितुरगादिनानाविधपदार्थान्सृजति। तन्नियमनाय च तत्तन्नामानि तत्तदाकाराण्यात्मनो देवानां च रूपाणि सृजति । एवं तत्काल एव संस्कारोपादानकान्पदार्थान्सृष्ट्वा बिम्बरूपी हरिर्जीवमनोधिष्ठितेनानिरुद्धाख्येन मनसा पश्यञ्जीवाय दर्शयति । तथा तादृशानेव शब्दादिविषयान्भुङ्क्त्वा जीवाय भोजयति । भोगप्रकारस्तु जाग्रदवस्थायां विषयभोगप्रकारवदनुसन्धेयः ।



इयांस्तु विशेषः । यज्जाग्रदवस्थायां स्थलान्तर्गतानि स्वरूपाणि । तथा तत्र शब्दः श्रोत्रेण रूपं चक्षुषेत्येवं विषयेन्द्रियविभागेनात्र तु सर्वानपि विषयान्मनसैवेति । कदाचित्तत्काल एव रथानश्वांश्च सृष्ट्वा जीवेन सह तत्र स्थित्वा तत्काल एव सृष्टेषु कुरुपाञ्चालादिदेशेषु मेरुमन्दरादिस्थानविशेषेषु वसन्तादिकालविशेषेषु तादृशैरेव पुत्रमित्रकलत्रादिभिः सहैव क्रीडित्वा जीवं क्रीडयति । अत्र सर्वा अपि क्रीडा जाग्रदवस्थावदेवानुसन्धेयाः । परन्तु तत्र बाह्यैः पदार्थैरत्र तु तत्रैव दृष्टश्रुतार्थविषयकसंस्कारोपादानकैरान्तरैरिति भेदः । एवं भगवांस्तत्काल एव दर्शयित्वाऽचिन्त्यया स्वशक्त्या पुनस्तत्काल एवार्थज्ञानात्मकस्वप्नं तिरोधत्ते । सेयं स्वप्नावस्थेत्युच्यते । अस्यामवस्थायां चक्षुराद्याभिमानिनां सूर्यादीनां परित्यक्तस्वस्वव्यापाराणां केवलं मनोभिमानि रुद्राधीनतयैव सुप्तवदवस्थानम् । एतदेव सूर्यादीनां रुद्रे लयो नामेति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये स्वप्नाख्यत्रयोदशप्रकरणम् ॥ १३ ॥*

## ॥ अथ सुषुप्तिप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं बिम्बरूपी हरिर्मार्गमध्ये तैजसाख्येन रूपेण किञ्चित्कालं विहृत्याथ जीवानामात्यन्तिकं सुखं दातुं सुषुप्तिं प्रापयितुमिच्छति । तदैव मुख्यप्राणे चक्षुराद्यभिमानिनां सूर्यादीनां मनोभिमानिरुद्रेण सहैवोक्तरूपो लयो भवति । ततो मुख्यप्राणो जीवमादाय तैजसाख्येन हरिणा सह हृदयस्थानं गच्छति । तदन्तरे च कदाचिज्जीवं मोहयति । तदानीं भगवतार्धप्राप्तिर्जीवस्य । तत्र न केवलं दुःखानुसन्धानं जीवकालाज्ञानाद्यनुसन्धानमप्यस्ति । सेयं मोहावस्थेत्युच्यते । हृदये च ब्रह्मनाडी वर्तते । तस्यां कमलमस्ति । कमलकर्णिकामूले च जीवस्य सर्वदाऽवस्थानम् । तत्रस्थोऽङ्गुष्ठाग्रप्रमाणको मूलेशस्तु सर्वदा जीवानामाधारः । सुषुप्तौ तु कर्णिकामूलं विहायाग्रं गच्छति । तत्रस्थाग्रेशस्तु तदानीमेवाधारः । इयांस्तु विशेषः । जाग्रदवस्थायां जीवस्य हृदयस्थत्वेऽपि

चक्षुरादौ प्रकाशतो विशेषसन्निधानम् । इदानीं तु सर्वप्रकाशोपसंहारेणात्रावस्थानमिति । ततः प्राज्ञापरनामकस्याग्रेशस्यात्यन्तं समीपे स्थितो जीवस्तेजस्यन्तर्गतो भवति । तेन च भगवत्सन्निदानविशेषेण जीवस्य स्वरूपसुखमभिव्यज्यते । तादृशं सुखमनुभवंस्तु जीवो जाग्रदाद्यवस्थाकालीनं श्रमचिन्तादिकं विस्मृत्य केवलमानन्दनिर्भरो मुक्तवदवतिष्ठते । तदा स्वात्मानं कालमज्ञानं सुप्त्यवस्थां सुखं चेत्येतदन्यन्न जानाति । सेयं सुप्त्यवस्थेत्युच्यते ।

सुषुप्तिकाले च प्राणादिपञ्चरूपी वायुरेव शरीरधारणं करोति । तत्रैवं भावनीयम् । प्रसिद्धयज्ञे त्रयोऽग्नयो गार्हपत्य आहवनीयो दक्षिणाग्नय इति । तथाऽध्वर्यूद्गाता यजमान आहुतिस्तत्फलं पुरोऽनुवाकायाज्या शस्या च ऋगित्येतानि सन्ति । तान्येतान्यत्राप्यनुसन्धेयानि । तत्र गार्हपत्योऽग्निर्हि पश्चिमभागेऽस्ति । अत्रापानस्यापि पश्चाद्भागे स्थितत्वात्स एव गार्हपत्यः । आहवनीयो हि गार्हपत्यात्प्रणीयते । प्राणोऽप्यपानात्प्रणीयते ऊर्ध्वं नीयत इति प्रणयनसाम्यादाहवनीयः । दक्षिणाग्निश्च चर्वादिहोमसाधनं भवति । व्यानोऽपि शरीरान्तःस्थितसर्वनाडीषु चर्वादिहोमसाधनं भवति । व्यानोऽपि शरीरान्तःस्थितसर्वनाडीषु सञ्चरणाद्धोमसाधनमिति दक्षिणाग्निः । अध्वर्युस्तत्तत्कालकृतहविषि भागान्विभज्य तदौचित्येन देवतासु नयति । समानोऽप्युच्छ्वासनिःश्वासरूपाहुतीः समं नयतीत्यध्वर्युः । उद्गातोद्गानेन यजमानस्येष्टप्रापकः । उदानस्तु निरन्तरं जीवरूपं यजमानं सुषुम्नास्थितं भगवन्तं प्रापयतीत्युद्गाता । प्राण एव पुरोऽनुवाकः । अपान एव याज्या । व्यान एव शस्येति । एवं यो वेद तस्य निरन्तरमेतादृशयज्ञकरणफलं भवति । निरन्तरं श्रीहरिणा सहवासफलं च भवति । तथैवमप्यनुसन्धेयम् । यदा भूताग्निर्नश्यति तदा तदभिमानिनि वायौ लीयते । यदा च सूर्योऽस्तं गच्छति तदा तदभिमान्यपि तत्रैव लीयते । यदा चन्द्रो वाऽस्तमेति तदा सोऽपि तत्रैवाप्येति । यदा तत्र तत्र स्थिता आपो नश्यन्ति तदा तदभिमान्यपि तत्रैव लीयते । एवं चतुर्णां देवानां संहर्तृत्वात्संवृक्त इति संवर्गनामा । इत्यधिदैवतम् ।



अथाध्यात्मं च । यदा जीवः स्वपिति तदा वागभिमान्यग्निः प्राण एव लीयते । चक्षुरभिमानी सूर्यः श्रोत्राभिमानी चन्द्रो मनोभिमानी कामश्चेति त्रयोऽपि तत्रैव लीयन्ते । एवं चतुर्णां देवानां संहर्तृत्वेन प्राणः संवर्गनामा । तथा च सर्वभक्तानां सर्वदोषान्दूरीकरोतीति दूर्नामा । स्वयं गच्छन्नेव स्वसम्बन्धेन सर्वं पवित्रीकरोतीति यज्ञनामा च । एवमध्यात्माधिदैवभेदेनाष्टौ देवा वायो रूपद्वयं चेति दशकं दशदिक्षु स्थितं पूर्णमन्नं विशेषेण राजनाद्विराडित्युक्तो हरिर्वृङ्क्त इत्येवमनुसन्धाता पृथिवीमण्डले प्राणिभिरनवरतं क्रियमाणं पुण्यफलं स्वयोग्यं सर्वमप्यनायासेन प्राप्नोति । अपरोक्षज्ञानं च प्राप्नोति । एवं भगवान्स्वस्मिन्सुप्तस्य विस्मृतजाग्रदाद्यवस्थाजनितसमस्तदुःखस्यावाप्तये परमानन्दस्य जीवस्य पुनर्जागरं प्रदातुं तत्प्रबोधयति । ततस्तैजसः प्राज्ञाद्विभज्य प्राणेन साकं जीवमादाय कण्ठस्थानमागत्य पूर्ववत्स्वप्नान्प्रदर्शयित्वा तमुद्बोधयति । ततो विश्वं तैजसाद्विभज्य सूर्यादिभिरिन्द्रियदेवैः सह दक्षिणाक्षिस्थानमागत्य पूर्ववत्सर्वव्यापारान्करोति ।

सूर्याद्या देवता अपि सर्वेन्द्रियेषु यथायथं स्थित्वा स्वस्वव्यापारान् कुर्वन्ति । ततः पुनः श्रान्तस्य जीवस्य भगवान्स्वप्नद्वारा सुषुप्तिं प्रापयित्वा पुनस्तमुद्बोधयति । एवं प्रतिदिनं जाग्रदाद्यवस्थासु भगवताऽनुग्रहीतो जीवस्तस्मिन्भुञ्जति स्वयं भुङ्क्ते । तस्मिन्शृण्वति शृणोति पश्यति पश्यति जिघ्रति जिघ्रति रसयति रसयति स्पृशति स्पृशति व्याहरति व्याहरति गृह्णाति गृह्णाति गच्छति गच्छति विसृजति विसृजत्यानन्दयत्यानन्दयति प्राणिति प्राणिति जीवति जीवति जनिष्यति जनिष्यति मरिष्यति मरिष्यति मुच्यति मुच्यति सुखमनुभवति सुखमनुभवति क्रीडति क्रीडति । किं बहुना प्रतिबिम्बत्वाद्बिम्बगुणक्रियादिभिरेव गुणक्रियादिमान्भवतीति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये सुषुप्त्याख्यं चतुर्दशप्रकरणम् ॥ १४ ॥*

## ॥ अथ गमनागमनप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं भगवान् श्रीहरिर्जननमरणचिन्तासन्तापादिसमस्तावद्यगन्धविधुरोऽपि समस्तगुणपूर्णोपि केवलं लीलयैव तथा तथा

प्रदर्शयञ्जीवेन साकं स्वेच्छापरिकल्पितशतसंवत्सरादिकाले प्रतिदिनं जाग्रदाद्यवस्थासु विहृत्याथ जीवस्य भूलोके पुनः पुनर्जननमरणभूयिष्ठे चिन्तासन्तापाद्यशेषदोषदुष्टे तत एवातिनिकृष्टे सर्वत्र जीवस्य कष्टमेवा-चक्षाणः सुषुप्तौ प्रतिदिनमानन्ददानेऽपि तस्याल्पकालीनतया तत्रालम्बुद्धि-मलभमानश्चिरकालीनामानन्दसन्ततिं प्रदातुं तं यदा भूलोकात्स्वर्गादिलोकं नेतुमिच्छति । तदैव चक्षुषि हृदये च रूपद्वयेन मरणनिमित्तदर्शन-प्रतिबन्धकतया संस्थितोऽनिरुद्धो देहं परित्यज्य गच्छति । ततश्चक्षुःस्था-निरुद्धापगमाच्चन्द्रमा इवादित्यो दृश्यते । न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठेत्याद्युक्तानि मरणसूचकानि प्रत्यक्षदर्शनानि भवन्ति । हृदयस्थानिरुद्धापगमात्तु पुरुषं कृष्णं कृष्णदन्तं पश्यति । स एनं हन्तीत्याद्युक्तानि स्वप्नदर्शनानि भवन्ति । तानि दृष्ट्वा मरणं निश्चित्य धैर्येण भगवान्भूदेहगेहादिकं हेयं त्याजयित्वा परमानन्दप्रदानाय मां लोकान्तरं नयतीति परमेण सम्भ्रमेण च तदा वागादिदेवानामुत्पत्तिक्रमवैपरीत्येन लयं चिन्तयति । तथाऽप्युत्पत्तिरादौ सर्वगतात्परब्रह्मणो बाह्यहृदयस्थस्य हरेः प्रादुर्भावः । तस्मान्मूलप्राणस्य सम्भवः । तस्मात्पञ्चप्राणानां प्राणापानेभ्यः समानोदानयोः सम्भवः ।

व्यानादपानस्यापानात्प्राणस्य प्राणाद्रुद्रस्य रुद्रादुमाया इत्येवं-क्रमेणोत्पन्नानां देवानामुत्पत्तिक्रमविपरीतक्रमेण लयो ध्येयः । तथा हि । उमाया रुद्रे लयो रुद्रस्य प्राणे प्राणस्यापानेऽपानस्य व्याने समानोदानयोः प्राणापानव्यानेषु पञ्चानां मूलप्राणे हृदिस्थे हरौ सर्वगते परब्रह्मणीति । ततः प्रक्रान्ते पुरुषयज्ञे शरीरत्यागरूपं मरणमेवाभृथस्नानं जानीयात् । तत्र मन्त्रत्रयम् । अक्षतमस्याच्युतमसि प्राणशंसितमसीति । हे भगवंस्त्वं स्वरूपेणाक्षयोऽसि गुणैरच्युतोऽसि मुख्यप्राणादप्यधिकसुखोऽसीति मन्त्रत्रयार्थः । योऽयं ममेदं शरीरं ससर्ज ररक्ष च स एवाद्य बालः क्रीडा-साधनमिवेदं जीर्णं शरीरं संहृत्याभिनवं शरीरान्तरमुत्पाद्य विहर्तुं



तावल्लोकान्तरं गच्छति । अहं तु प्रतिबिम्बत्वाच्छायेव तमनुगच्छामीत्यादि-रूपेण सृष्टिस्थितिसंहारादिकर्तृत्वमनुसन्दधानः सर्वात्मना श्रीहरि चरणारविन्दमकरन्दे स्वान्तं निवेशयन्पुरुषयज्ञं समापयेत् । ततो मम शिरःकपालोपरिदेशे चतुर्भुजः शङ्खचक्रगदापद्मधरः पीताम्बरो वनमाली सर्वाभरणभूषितोऽशेषपरिवारयुतः सर्वलक्षणसंयुतो वासुदेवः सदा तिष्ठति ।

तस्य ध्वजवज्राङ्कुशादिचिन्होपेताभ्यां पादाभ्यां निःसृतोदकधारा ब्रह्मरन्ध्रमार्गेण शरीरं प्रविशन्ती त्रिभागा भवति । तत्रैकेन भागेन वामभागस्था नाडीः प्रविशन्ती गङ्गासंज्ञां लभते । भागान्तरेण दक्षिण-भागस्थनाडीः प्रविशन्ती यमुनासंज्ञां लभते । तृतीयभागेन सप्रभेदां सुषुम्नां प्रविशन्ती सरस्वतीति गीयते । एवं त्रिभिर्भागैरन्तःशुद्धिं करोतीति चिन्तयेत् । एवं रागद्वेषाद्यन्तर्मलपरिहारकं सार्धत्रिकोटितीर्थस्नानतोऽनन्त-गुणाधिकमपमृत्युपरिहारकं ध्यानस्नानं विधायोक्तदिशा स्वबिम्बरूपं हरिमेव चिन्तयेत् । अथ प्राज्ञनामा कर्णिकाग्रस्थितो हरिर्जीवमादाय लीलया तमारुह्य पुरान्महाराजेव शरीरादन्याभिर्नाडीभिर्बहिर्निर्गच्छति । ततोऽमात्यादयः प्रजा इव मुख्यप्राणादयः सर्वेऽपि देवा महाराजोपचारैः सेवन्तस्तमनुगच्छन्ति । अत्र जीवः स्थूलशरीरं परित्यज्य गच्छन्नुत्तरदेहारम्भकैर्भूतसूक्ष्मै-रिन्द्रियसूक्ष्मैश्च परिवेष्टित एव गच्छति । पूर्वतने परित्यज्यमाने देहे स्थिता देवा द्विविधाः सूक्ष्माभिमानिनः स्थूलाभिमानिनश्चेति । तत्राद्याः स्वाभिमतानि स्थूलावयवभूतानि सूक्ष्माणि विहायोत्तरदेहबीजभूतानि सूक्ष्माण्यधिष्ठाय जीवेन सह गच्छन्ति । पुनर्जीवरेतसि गते स्वाभिमतैश्च तैर्नवीनदेहमिन्द्रियाणि च निर्मिमते । द्वितीये तु स्वाभिमतानि स्थूलानि शरीरेन्द्रियाणि परित्यज्याधिदैवगतं स्वमूलरूपं प्राप्तास्तत एतैरारब्धे सति स्थूलदेहे स्वस्वस्थानानि पुनर्मूलरूपाद्विभक्तैः स्वरूपैः प्रविश्य जीवोप-कारका भवन्ति । अत्र स्थूलदेहे परमात्मानमारभ्य सर्वे देवाः स्वस्वमूलरूपं गच्छन्ति पुनरागच्छन्ति च नवीनशरीरे प्राप्त इति ।

देवैर्जीवेनापि परित्यक्तानि स्थूलशरीरेन्द्रियाणि तु यथायथं स्वकारणेषु लीयन्ते। तत्र शरीरे गन्धविशिष्टपृथिवी बाह्यपृथिव्यां लीयते। श्लेष्मपूयासृगादिकार्यविशिष्टा आपो बाह्याप्सु। औष्ण्यगुणविशिष्टं तेजो बाह्यतेजसि। श्वासोच्छ्वासादिकार्यविशिष्टो वायुर्बाह्यवायौ। शरीरावच्छिन्नाकाशो बाह्याकाशे। एवमुच्चारणादिकार्यविशिष्टा वाक्कृतिविशिष्टौ पाणी गतिविशिष्टौ पादौ विसर्गसहितः पायू रतिसहित उपस्थ इति पञ्चकर्मेन्द्रियाणि स्वस्वकारणेषु वागादिकर्मेन्द्रियेषु लीयन्ते। तथा शब्दविशिष्टं श्रोत्रं स्पर्शविशिष्टा त्वग्रूपोपेतं चक्षू रसयुता जिह्वा गन्धोपेतं घ्राणमिति पञ्चज्ञानेन्द्रियाणि स्वस्वकारणेषु श्रोत्रादिज्ञानेन्द्रियेषु लीयन्ते। बुद्धिर्बुद्धौ लीयते। मनो मनसि लीयते। तथा कार्यगतानां भगवतो देवानां च रूपाणां कारणगतेषु स्वस्वरूपेष्वेकीभावलक्षणो लयो भवतीति।

एवं देवैरनुगतो जीवमारुह्य शरीरं परित्यज्य स्वर्गादिलोकं गच्छन्प्राज्ञनामा हरिः कण्ठदेश इव मध्येमार्गं जीवस्य विश्रान्त्यै धूमादिलोकं गच्छति। तमागच्छन्तं भगवन्तं तत्र तत्रस्था देवास्तत्रत्यैः समस्तोपचारैरभियान्ति। ततस्तैरादृतस्तत्र किञ्चित्कालं स्थित्वा पुनर्जीवमादायोत्तरत्र गच्छंस्तत्र तत्र लोकेष्वेवमादृतः क्रमात्स्वर्गं गच्छति। तत्र च सुकृताख्यं स्वस्वरूपं निमित्तीकृत्य बहुकालमपेक्षितैः समस्तकामैर्विहृत्य तादृशप्रारब्धकर्मपरिपाककाले पुनर्भूम्यादिस्थानेषु विहर्तुमिच्छति। अथ तदैव हरिस्तत्त्वेशाश्च स्वर्गस्थितेऽदनादङ्गनेतृत्वाच्चाग्निशब्दवाच्ये नारायणाख्येऽग्नावुत्तरदेहारम्भकैर्भूतसूक्ष्मैः परिवेष्टितं जीवं जुह्वति। अत्र नारायणोद्भूतानि नारायणादिपञ्चरूपाण्येवास्याग्नेः समिदादिपञ्चरूपाणि भवन्ति। तथा हि। प्राणिकृतं कर्मजातमादाय यातीत्यादित्यनामाऽऽदित्यान्तर्गतो नारायणनारायणः समेधनात्समित्। रतिशंमानरूपत्वाद्रश्मिनामा रश्मिस्थितो नारायणवासुदेवोऽज्ञानादीनां धूत्करणाद्धूमः। तमसाऽहनीयत्वादहर्नामाऽहःसंस्थितो नारायणसङ्कर्षणोऽरञ्चितत्वादर्चिः। आह्लादरूपत्वाच्चन्द्रनामा चन्द्रस्थो



नारायणप्रद्युम्नोऽङ्गरतेरङ्गारः। न विद्यते क्षत्रं पालको यस्येति नक्षत्रनामा नक्षत्रस्थो नारायणानिरुद्धो विविधं स्फुरणात् विष्फुलिङ्ग इति। एवं देवा जीवं नारायणाख्येऽग्नौ हुत्वा ततश्चन्द्रद्वारा परं ब्रह्मादिकमपि जन्यमस्येति पर्जन्यनाम्नि पर्जन्यस्थे वासुदेवाख्येऽग्नौ जुह्वति। अत्रापि वासुदेवोद्भूतानि नारायणादिपञ्चरूपाण्येव समिधादिपञ्चरूपाणि। एवमुत्तरत्रापि। तथा हि। ज्ञानायूरूपत्वाद्वायुनामा वायुस्थो वासुदेवनारायणः समित्। अपां भरणादभ्रनामाऽभ्रस्थो वासुदेववासुदेवो धूमः। विशेषेण द्योतनाद्विद्युन्नामा विद्युत्संस्थितो वासुदेववासुदेवो धूमः। विशेषेण द्योतनाद्विद्युन्नामा विद्युत्संस्थितो वासुदेवसङ्कर्षणोऽर्चिः। अशनादशनिनामाऽशनिस्थो वासुदेवप्रद्युम्नोऽङ्गारः। निह्लादात् ह्लादुनिनामा ह्लादुनिस्थो वासुदेवानिरुद्धो विष्फुलिङ्ग इति।

एवं वासुदेवाख्येऽग्नौ हुत्वा ततो वृष्टिद्वारा प्रथितत्वात्पृथिवीनाम्नि पृथिवीस्थिते सङ्कर्षणाख्येऽग्नौ जुहोति। तत्र सम्यग्वासयतीति संवत्सरनामा संवत्सरस्थः सङ्कर्षणनारायणः समित्। प्रकाशनादाकाशनामाऽऽकाशस्थः सङ्कर्षणवासुदेवो धूमः। रतिदानाद्रात्रिनामा रात्रिस्थः सङ्कर्षणसङ्कर्षणोऽर्चिः। मोक्षादिकं मुख्यं दिशतीति दिङ्नामा दिक्संस्थः सङ्कर्षणप्रद्युम्नोऽङ्गारः। स्वर्गादिकमवान्तरं दिशतीत्यवान्तरदिङ्नामाऽवन्तारदिक्संस्थितः सङ्कर्षणानिरुद्धो विष्फुलिङ्गः। ततोऽन्नद्वारा पुरुत्वात्पूर्णत्वात्पुरुषनाम्नि पुरुषस्थे प्रद्युम्नाख्येऽग्नौ जुव्हति। तत्र वचनाद्वाङ्नामा वाचिस्थः प्रद्युम्ननारायणः समित्। प्रकर्षेणाननात्प्राणनामा प्राणस्थः प्रद्युम्नवासुदेवो धूमः। हूयतेऽस्मिन्निति जिह्वानामा जिह्वासंस्थितः प्रद्युम्नसङ्कर्षणोऽर्चिः। दर्शनाच्चक्षुर्नामा चक्षुःस्थः प्रद्युम्नप्रद्युम्नोऽङ्गारः। श्रवणाच्छ्रोत्रनामा श्रोत्रस्थः प्रद्युम्नानिरुद्धो विष्फुलिङ्गः।

ततो रेतोद्वारा जोष्यत्वाद्भोग्यत्वाद्योषानाम्नि योषाख्येऽनिरुद्धाख्येऽग्नौ जुव्हति। तत्रोप समीपे स्थितत्वादुपस्थनामोपस्थस्थितोऽनिरुद्धनारायणः समित्। उपमन्त्रणकर्तृत्वादुपमन्त्रणनामोपमन्त्रणस्थोऽनिरुद्धवासुदेवो

धूमः। युनक्ति मिश्रीकरोतीति योनिनामा योनिस्थोऽनिरुद्धसङ्कर्षणोऽर्चिः। योन्यन्तःक्रियमाणव्यापारकर्तृत्वादन्तःकरणनामाऽन्तःकरणस्थोऽनिरुद्धप्रद्युम्नोऽङ्गारः। अभिनन्दयतीत्यभिनन्दनामाऽभिनन्दस्थितोऽनिरुद्धानिरुद्धो विष्फुलिङ्गः। एवं पञ्चमाग्नौ होमानन्तरं जीवस्य पुरुषशब्दितो देहो जायते। तत एवायं पुरुष इत्युच्यते। अत्रापि पूर्ववद्वासुदेवाद्योनिक्षिप्तिः प्रद्युम्नादासेककर्म सङ्कर्षणाद्रूपनिष्पत्तिरनिरुद्धाद्धारणं भगवतो देवानां च शरीरप्रवेशोऽवस्थात्रयनिर्माणं ज्ञानेन्द्रियैः शब्दाद्यात्मभोगः कर्मेन्द्रियैः क्रियात्मभोग इत्यादिकं सर्वमप्यनुसन्धेयमिति ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये गमनागमनाख्यं पञ्चदशप्रकरणम् ॥१५॥*

## ॥ अथ मोक्षप्रकरणम् ॥

॥ हरिः ॐ ॥ एवं बिम्बरूपी श्रीहरिः पुण्यपापात्मकं स्वरूपमेव निमित्तीकृत्य जीवेन सह भूम्यन्तरिक्षस्वर्गादिषु पुनः पुनर्विहृत्यापि तत्र सर्वत्र प्रकृष्टाप्रकृष्टविषयजन्यमनित्यमल्पमेव सुखं तस्यावेक्ष्यासहमानः स्वरूपभूतमनादिनित्यमच्छिद्रं सुखं दातुं तत्प्रतिबन्धकप्रकृतिबन्धादुन्मुच्य तं वैकुण्ठादिस्वर्लोकं नेतुं धूमाद्यन्तरिक्षलोकमिव मध्येमार्गं तस्य विश्रमाय वा कर्मक्षयोत्क्रान्तिमार्गभोगभेदेन चतूरूपाया मुक्तेः क्रमेणैव प्राप्यत्वाद्वा प्रथममेव कर्मक्षयापरपर्यायां जीवन्मुक्त्यवस्थां ददाति। ततो बहुजन्मार्जित-निष्कामभगवदर्चनादिपुण्यपरिपाककाले शुद्धान्तःकरणस्य दैवाल्लब्धया महत्सेवया सञ्जातवैराग्यभक्त्यादिगुणस्य जीवजातस्य स्वयमेव गुर्वादिषु स्थित्वा तत्तद्योग्यतापरिपाककालानुसारेण तत्तद्योग्यतानतिरेकेण मुख्यं मोक्षसाधनमुपदिश्य तदर्थं श्रवणमनननिदिध्यासनभक्त्यादिरूपाणि जीवस्य स्वरूपभूतश्रवणादिसाधनव्यञ्जकानि साधनानि सम्पादयति। तानि च साधनानि तत्तन्नामानि तत्र तत्र स्थितानि तत्तत्फलप्रदानि स्वस्वरूपाण्येव। तान्येव च निमित्तीकृत्यापरोक्षप्रतिबन्धकप्रारब्धावसाने स्वात्मानमपरोक्षतया



दर्शयति। तदपि न प्रथममेव। किन्नामादौ कर्माभिमानिपुष्करस्यापरोक्ष-मुत्पाद्य ततस्तत्प्रसादेन तदुत्तमदेवस्यापरोक्षमुत्पादयति। एवं तत्प्रसादेन तदुत्तमस्येत्येवंक्रमेण सर्वावरं पुष्करमारभ्य सर्वदेवोत्तमप्राणनायक-पर्यन्तमपरोक्षमुत्पाद्य सर्वानुज्ञया विशेषतः प्राणानुग्रहेण तस्य परमात्मा-परोक्षो जायत इति।

अत्र स्वयोग्यबिम्बदर्शनमेव सर्वेषां मोक्षसाधनं मुख्यम्। कदा-चिज्जायमानमपि रामकृष्णाद्यवतारदर्शनं बिम्बदर्शनसाधनतया परम्परयैवेति ज्ञेयम्। बिम्बदर्शनं चेत्थं भवति। यथा हि दर्पणे स्वमुखं स्वस्याभिमुख्येन भासत एवं जीवस्वरूपस्यैव दर्पणतया जीवस्वरूपे पादादिमस्तकान्त-मवयवशो व्याप्य वर्तमानो बिम्बरूपी हरिः केवलं शुद्धज्ञानात्मकस्य जीवस्य जीवाभिन्नदर्पणेऽनन्तगुणक्रियात्मकमपि जीवोपासितगुणक्रियाविशिष्टं सुन्दरतरविग्रहं प्रकटीकृत्य जीवाभिमुख्येन दर्शयतीति। जीवस्तु बिम्बापरोक्षानन्तरं जीवन्मुक्त्यवस्थायां कदाचित्कचिदेव तत्पश्यति। मुक्तौ तु निरन्तरं स्वरूपेन्द्रियगोचरतया विद्यमानं सर्वदैव पश्यति। एवं बिम्बरूपी हरिर्जीवस्यापरोक्षमुत्पाद्य पूर्वोत्तराघयोरश्लेषविनाशौ प्रदाय भागवतधर्मवृद्धये ज्ञानिनं कञ्चित्कालमवस्थापयितुं प्रारब्धकर्माण्यवशेष्य योग्यजनमुद्धरन् कञ्चित्कालं विहरति। एवं जीवन्मुक्त्यवस्थायां विहृत्य तत्र कर्मक्षयलक्षणां मुक्तिं प्रदायाथ स्वावशेषितप्रारब्धकर्मावसाने ब्रह्मनाड्योत्क्रान्तिलक्षणां मुक्तिं प्रदातुमिच्छति। ततो हृदिस्थस्य हरेस्तेजसा हृदयाग्रे प्रकाशो जायते। ततस्तेन प्रकाशेन नाडीद्वारा प्रकाशिते सति पूर्ववदेव प्राणाद्यशेष-परिवारवेष्टितो हार्दो हरिर्जीवमादाय तेन द्वारेण ब्रह्मनाडीं प्रविशति। तत्र च पञ्चपञ्चाशत्सङ्ख्याका उत्तरायणसंज्ञका आदित्यस्य रश्मयः सन्ति। तत्प्रकाशेनैव नाड्यन्तर्गच्छन्मस्तकसीमानं विदार्य तत उत्क्रामति। एव जीवोत्क्रान्तिलक्षणां मुक्तिं दत्वा मार्गलक्षणां तां प्रदातुमर्चिरादिमार्गेणैव गच्छति।

तत्रायं क्रमः । आदौ शरीरादुत्क्रान्तोऽर्चिर्लोकं गच्छति । अर्चिर्लोके चार्चिर्नामाग्निसुतोऽग्निर्ज्योतिरिति रूपद्वयेन तिष्ठति । तत्रादावग्निनामकं रूपं गत्वा ततो ज्योतिर्नामकं द्वितीयं रूपमेति । प्रत्युद्गमादिभिर्भगवत्पूजा च पूर्ववदेव सर्वलोकेषु भवति । एवमर्चिर्लोके द्विरूपेण संस्थितमग्नेः सुतमर्चिर्नामानं देवं प्राप्य तत आतिवाहिकलोकं गच्छति । तत्रातिवाहिक-लोकनामानं वायुपुत्रं प्राप्य ततोऽहरभिमानिलोकं ततः शुक्लपक्षाभिमानिलोकं तत उत्तरायणाभिमानिलोकं ततः संवत्सराभिमानिलोकं ततो विद्युदभिमानि लोकं ततो वरुणलोकं ततः प्रजापतिलोकं ततः सूर्यलोकं ततः सोमलोकं ततो वैश्वानरलोकं तत इन्द्रलोकं ततो ध्रुवलोकं ततो भारतीलोकं ततो वायुलोकं गच्छति । तत्र च वायुदेवप्रसादेन भगवद्ध्यानादिसुखसम्भृतमना जीवो बहुकालं तिष्ठति ।

ततः परान्ते चतुर्मुखलये प्राप्ते तावदशेषतत्त्वानां लयो भवति । तथा हि । शरीरमन्ने प्रलीयते । अन्नं धानासु । धाना भूमौ । भूमिर्गन्धतन्मात्रे । मात्राविशिष्टा भूमिरप्सु । आपो रसे । रसविशिष्टा आपस्तेजसि । तेजो रूपे सरूपं तेजो वायौ । वायुः स्पर्शे । सस्पर्शो वायुराकाशे । आकाशः शब्दे सशब्द आकाश इन्द्रियरूपं मन इन्द्रियाणि चेत्येते मनस्तत्त्वे । मनस्तत्त्वं बुद्धितत्त्वे । बुद्धितत्त्वमहङ्कारतत्त्वे । अहङ्कारतत्त्वं महत्तत्त्वे । महत्तत्त्वं गुणत्रये । गुणत्रयं मूलप्रकृतौ लीयते । तदा ब्रह्माण्डावरणानां व्युत्क्रमेण लयो भवतीति । एवं तत्त्वलयानन्तरमशेषदेवानां स्वस्वोत्तमेषु प्रवेशेन शरीरलयो भवति । तत्र मार्गद्वयम् । सुरानुगानां कुबेरे । कुबेरस्य वरुणस्य च सोमे । सोमस्य विष्वक्सेनादिभगवत्पार्षदानां चानिरुद्धे । अनिरुद्धस्य सनत्कुमारव्यतिरिक्तानां सनकादीनां च कामे । कामस्य वारुण्याम् । वारुण्याः शेष इति । इति शेषमार्गः ।

उक्तव्यतिरिक्तानां देवानामग्नौ । अग्नेः सूर्ये । सूर्यस्याकाशाभिमानिनः पृथिव्याश्च गुरौ । भृग्वादीनां दक्षे । वर्णाश्रमाचारवतां मनुष्याणां पितॄणां निर्ऋतेश्च धर्मे । धर्मस्य वैवस्वतादिमनूनां प्रियव्रतादिराज्ञां च



स्वायम्भुवमनौ । गुरोर्दक्षस्य स्वायम्भुवमनोर्मरुद्गणानां च शक्रे । शक्रस्य सौपर्ण्याः सुपर्ण इति । इति गरुडमार्गः । ततः शेषसुपर्णयोर्वाण्याम् । वाण्याश्चतुर्मुखे । चतुर्मुखस्य परे ब्रह्मणि वासुदेव इति । ततो वायुलोके बहुकालं वर्तमानो जीवश्चतुर्मुखलये प्राप्ते तेन सह वैकुण्ठलोकं प्राप्य तत्परिखाभूतविरजास्नानेन भिन्नलिङ्गशरीरः पुष्करादिप्राणान्तसर्वदेवताद्वारा भगवन्तं प्रविश्य प्रलयावसानपर्यन्तं तिष्ठति । भगवांस्तु वासुदेवादि-चतुर्मूर्तिभिरशेषजीवान्स्वोदरे कृत्वा रमया सह प्रलयोदके विहरति । ततः प्रलयावसाने सृष्टीच्छायामुक्तरीत्या महदादितत्त्वानि ब्रह्माण्डं चतुर्दश-भुवनानि च सृष्ट्वा श्वेतद्वीपानन्तासनवैकुण्ठाख्येषु लोकेषु यथापूर्व-मभिव्यक्तेषु येऽव्यवहितपूर्वकल्पेषु भिन्नलिङ्गशरीरा निवृत्तसमस्तानिष्टा जीवास्तेषां स्वस्वरूपभूतपरमानन्दस्यानवरतभोगार्थमनुज्ञां ददाति । ततो भगवदनुज्ञातास्तत एवापगतेच्छावरणा जीवाः श्वेतद्वीपं गत्वा तत्रस्थं भगवन्तं दृष्ट्वा तदनुज्ञाताः स्वस्वयोग्यतानुसारेण पृथिव्यामन्तरिक्षे स्वर्गे महदादौ सत्यलोके वैकुण्ठादौ चानन्दमनुभवन्तस्तिष्ठन्ति ।

एवं भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तकर्माणः स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमणेन वा परित्यक्तदेहाः स्वोचितेनार्चिरादिना पथा वैकुण्ठ-वासिनं भगवन्तं हिरण्यगर्भेन सह प्राप्तभिन्नलिङ्गशरीरा विध्वस्तप्रकृतयोऽ-त्यन्तनिवृत्तानिष्टाः सम्यगाविर्भूतानन्दादिगुणा भगवत्समीप एव तमुपासीनाः स्वरूपेण लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान्दिव्य-भोगांस्तारतम्येन भुञ्जाना न कदाचित्परिवर्तन्त इत्यशेषमतिमङ्गलम् ॥

*इति श्रीविष्णुतीर्थविरचिते षोडशीये मोक्षाख्यं षोडशप्रकरणम् ॥ १६ ॥*

रूपैर्विचित्रैरथ चैकपूर्वैर्विचित्रकार्यैः शतकोटिसङ्घैः ।
विहारकर्त्रे च गतिप्रदात्रे सदा जनानां हरये नमोऽस्तु ॥

*इति श्रीविष्णुतीर्थविरचिता षोडशी समाप्ता ॥*

*श्रीकृष्णार्पणमस्तु ॥*

अथ श्रीविष्णुतीर्थार्यविरचिता

# चतुर्दशी प्रारभ्यते

॥ हरिः ॐ ॥

## ॥ अथ जीवहोमप्रकरणम् ॥

अत्र वक्ष्यमाणानां चतुर्दशोपासनानामप्यपरोक्षज्ञानं मोक्षश्च मुख्यं फलम् । तत्रावश्योपासनस्य पञ्चमहापातकिभिः सहवासोऽपि तत्सहवास-जनितपापलेपाभावोऽवान्तरफलम् । तत्रैवमनुसन्धानप्रकारः । तत्त्व-नियामकदेवा उत्तरदेवत्वारम्भकैर्भूतसूक्ष्मैः परिवेष्टितं जीवं नारायणादि-पञ्चाग्निषु जुह्वति । तत्रासौ प्राणस्थितत्वात्प्रकाशरूपत्वाच्चासौ लोक-शब्दवाच्यः । असौ लोकाभिधे स्वर्गलोके स्थितो नारायण एव प्रथमाग्निः । स चादनादङ्गनेतृत्वाच्चाग्निरित्युच्यते । तस्याग्नेर्नारायणोद्भूतानि नाराराणादि पञ्चरूपाण्येव समिदादिपञ्चरूपाणि भवन्ति । तथा हि । प्राणिकृत-कर्मजातमादाय यातीत्यादित्यनामाऽऽदित्यान्तर्गतो नारायणनारायणः । समेधनात्समित् रतिशंमानरूपत्वाद्रश्मिनामा रश्मिस्थो नारायणवासुदेवः । अज्ञानादीनां धूत्करणाद्धूमस्तमसाऽहनीयत्वादहर्नामाऽहःसंस्थितो नारायण सङ्कर्षणः । अरञ्चितत्वादर्चिराल्हादरूपत्वाच्चन्द्रनामा चन्द्रसंस्थितो नारायण प्रद्युम्नः । अङ्गरतेरङ्गारः । न विद्यते क्षत्रं पालको यस्येति नक्षत्रनामा नक्षत्रस्थितो नारायणानिरुद्धः । विविधं स्फुरणाद्विष्फुलिङ्ग इति ॥ १ ॥

एवं देवा जीवं नारायणादिपञ्चरूपात्मकसमिदादिपञ्चरूपोपपन्ने नारायणाख्ये प्रथमाग्नौ हुत्वा ततश्चन्द्रद्वारा द्वितीयाग्नौ जुह्वति । परब्रह्मादिकमपि जन्यमस्येति पर्जन्यनामा पर्जन्यस्थो वासुदेवो द्वितीयाग्निः । अस्याग्नेर्वासुदेवोद्भूतानि नारायणादिपञ्चरूपाण्येव समिदादिपञ्चरूपाणि । तथा हि । ज्ञानायुरूपत्वाद्वायुनामा वायुस्थो वासुदेवनारायणः समित् । अपां



हरणादभ्रनामाऽभ्रस्थो वासुदेवो धूमः । विशेषेण द्योतनाद्विद्युन्नामा ॥ विद्युत्संस्थितो वासुदेवसङ्कर्षणोऽर्चिः । अशनादशनिर्नामाऽशनिस्थितो वासुदेवानिरुद्धो विष्फुलिङ्ग इति ॥ २ ॥

एवं जीवं देवा नारायणादिपञ्चरूपात्मकसमिदाद्युपपन्ने वासुदेवाख्ये द्वितीयाग्नौ हुत्वा ततो वृष्टिद्वारा तृतीयाग्नौ जुह्वति । प्रथनात्पृथिवी नामा पृथिवीसंस्थितः सङ्कर्षणस्तृतीयाग्निः । अस्याग्नेः सङ्कर्षणोद्भूतानि नारायणादिपञ्चरूपाण्येव समिदादिपञ्चरूपाणि । तथा हि । सम्यग्वासयतीति संवत्सरनामा संवत्सरस्थः सङ्कर्षणनारायणः समित् । प्रकाशनादाकाशनामाऽऽकाशस्थः सङ्कर्षणवासुदेवो धूमः । रतिदानाद्रात्रिनामा रात्रिसंस्थः सङ्कर्षणसङ्कर्षणोऽर्चिः । मोक्षादिकं मुख्यपुरुषार्थं दिशतीति दिङ्नामा दिक्संस्थितः सङ्कर्षणप्रद्युम्नोऽङ्गारः । स्वर्गादिक-मवान्तरं दिशतीत्यवान्तरदिङ्नामाऽवान्तरदिक्संस्थितः सङ्कर्षणानिरुद्धो विष्फुलिङ्ग इति ॥ ३ ॥

एवं सङ्कर्षणाख्ये तृतीयाग्नौ हुत्वाऽन्नद्वारा चतुर्थाग्नौ जुह्वति । पुरुत्वात्पूर्णत्वात्पुरुषनामा पुरुषस्थः प्रद्युम्नश्चतुर्थाग्निः । अस्याग्नेः प्रद्युम्नो-द्भूतानि नारायणादिपञ्चरूपाण्येव समिदादीनि । तथा हि । वचनाद्वाङ्नामा वाचि संस्थितः प्रद्युम्ननारायणः समित् । सङ्कर्षणात्प्राणनामा प्राणसंस्थितः प्रद्युम्नवासुदेवो धूमः । हूयतेऽस्मिन्निति जिह्वानामा जिह्वासंस्थितः प्रद्युम्न-सङ्कर्षणोऽर्चिः । दर्शनाच्चक्षुर्नामा चक्षुःस्थः प्रद्युम्नोऽङ्गारः । श्रवणाच्छ्रोत्र-नामा श्रोत्रस्थः प्रद्युम्नानिरुद्धो विष्फुलिङ्ग इति ॥ ४ ॥

एवं प्रद्युम्नाख्ये चतुर्थाग्नौ हुत्वा रेतोद्वारा पञ्चमाग्नौ जुह्वति । जोषत्वाद्भोग्यत्वाद्योषानामा योषित्स्थोऽनिरुद्धः पञ्चमाग्निः । अस्याग्नेर-निरुद्धोद्भूतानि नारायणादिपञ्चरूपाण्येव समिदादि पञ्चरूपाणि । तथा हि । उप समीपे स्थितत्वादुपस्थनामोपस्थस्थितोऽनिरुद्धनारायणः समित् ।

उपमन्त्रणकर्तृत्वादुपमन्त्रणनामोपमन्त्रणस्थोऽनिरुद्धवासुदेवो धूमः । युनक्ति मिश्रीकरोतीति योनिनामा योनिस्थितोऽनिरुद्धसङ्कर्षणोर्चिः । योन्यन्तःक्रियमाणव्यापारकर्तृत्वादन्तःकरणनामाऽन्तःकरणस्थोऽनिरुद्ध प्रद्युम्नोऽङ्गारः । अभिनन्दयतीत्यभिनन्दनामाऽभिनन्दस्थितोऽनिरुद्धा-निरुद्धो विष्फुलिङ्ग इति ॥ ५ ॥

एवं क्रमेण पञ्चाग्नौ होमानन्तरं जीवस्य पुरुषशब्दितो देहो जायते । तत एवायं पुरुष इत्युच्यते ॥

*इति जीवहोमप्रकरणम् ॥ १ ॥*

## ॥ अथोपनयनप्रकरणम् ॥

॥ हरिः ॐ ॥ ॐकारस्य भगवानृषिर्गायत्रीछन्दोऽनन्तगुणपूर्णो नारायणो देवता । भूरादीनां तिसृणामपि व्याहृतीनामविशेषेण ब्रह्मा ऋषिर्गायत्रीन्छन्द उद्यदादित्यवर्णो ज्ञानाभयमुद्रायुतहस्तद्वयो भगवान् श्रीहरिर्देवता । विशेषेण तु भूरित्यस्य विश्वामित्रर्षिर्गायत्रीछन्दः स्फूर्ति-रूपत्वात्पूर्णरूपत्वाच्च भूर्नामाऽग्न्यन्तर्गतः श्री अनिरुद्धो वराहश्च देवता । भुव इत्यस्य जमदग्निर्षिरुष्णिक्छन्दो भावनाज्जगत उत्पादनाद्भूरिवीर्य-वत्त्वाद्भूतिवरत्वाच्च भुवर्नामा वाय्वन्तर्गतप्रद्युम्नो नृसिंहश्च देवता । सुवरित्यस्य भरद्वाजऋषिरनुष्टुप्छन्दः सुबलरूपत्वादनन्तसुखवत्त्वाच्च सुवर्नामा सूर्यान्तर्गतः सङ्कर्षणः कपिलश्च देवता । गायत्र्या विश्वामित्रऋषिर्गायत्री छन्दःस्रष्टृत्वात्सवितृनामा प्रोद्यदादित्यवर्णः सूर्यमण्डलमध्यगश्चक्रशङ्खदोर्द्वयः श्रीनारायणो देवता । तत्र तदिति प्रथमवर्णस्याग्न्यन्तर्गतः श्रीपरशुरामो देवता । तदादिचतुर्विंशत्यक्षराणां केशवाद्याश्चतुर्विंशन्मूर्तयो देवताः ।

आद्यस्य पादस्यानिरुद्धो देवता । द्वितीयस्य प्रद्युम्नः । तृतीयस्य सङ्कर्षणः। सर्ववेदोच्चारणं गानं सर्वसंरक्षणं त्राणम् । एतादृशगानत्राण-



कर्तृत्वाद्गायत्रीनामा भगवान् षड्विधः । तत्र गायत्र्यां संस्थितो गायत्रीनामा स्त्रीरूपः सूर्यसमप्रभो हयग्रीवः प्रथमः । पूर्णत्वाद्भूतनामा मत्स्यादि-चेतनाचेतनान्तर्गतरूपाणि च द्वितीयः । वाङ्नामा वाचि संस्थः स्त्रीरूपो हयग्रीवस्तृतीयः । पृथिवीनामा पृथिवीसंस्थः पीतवर्णः स्त्रीरूपो हयग्रीवश्चतुर्थः । समस्तपदार्थाधारः शरीरनामको जीवव्याप्तः पञ्चमः । इन्द्रियाणां पञ्चप्राणानां चाधारो हृदयनामको जीवहृदयस्थः षष्ठ इति । अथ गायत्र्यर्थः । यो भर्गो भरणगमनकर्ता नोऽस्माकं धियः प्रचोदयात्स्वविषये प्रेरयेत् । तस्य सवितुर्जगदुत्पादकस्य देवस्य क्रीडादिगुणविशिष्टस्य नारायणस्य तद्व्याप्तं वरेण्यं भजनीयं रूपं वयं धीमहि चिन्तयाम इति । ततः प्राच्यां दिशीन्द्राग्नी सभार्यौ प्रद्युम्नश्च । प्रतीच्यां वरुणवायू सभार्यौ सङ्कर्षणश्च । उदीच्यां सोमरुद्रौ सभार्यावनिरुद्धश्च । ऊर्ध्वायां ब्रह्मवायू सभार्यौ सङ्कर्षणश्च । अधरायां शेषकामौ सभार्यौ वासुदेवश्च नम्या इति ॥

*इत्युपनयनप्रकरणम् ॥ २ ॥*

## ॥ अथ सूर्यगतिप्रकरणम् ॥

॥ हरिः ॐ ॥ आदित्यमण्डले वायुमधिष्ठानीकृत्य भगवान्नारायणोऽस्ति । स च सर्वदा समत्वात्सर्वेषामादित्यमण्डले मां प्रति मां प्रतीति यत्प्रतीतिसाम्यं तत्कारणत्वाच्च सामनामा सर्वपापशून्यत्वादुन्नामा । तथा कं पिबन्नाल-सम्बन्धिरक्तपद्मसमाननेत्रः सर्वदा सर्वप्राणिभिः स्तुत्यः । सर्वप्राणिहितार्थ-मोङ्करोच्चारकारी नखमारभ्य केशपर्यन्तं विलक्षणसुखात्मकदेहः सर्ववर्णो वाणीप्राणाभ्यामृक्- सामवेदाभ्यां स्तूयमानः । एतादृशो भगवान्सप्तकालेषु सप्तस्वरूपैरादित्ये स्थित्वा यथायथं सर्वप्राणिनामाश्रयो भवति । तथा हि । आदित्योदयात्पूर्वं षड्घटिकात्मक एकः कालः । उदयमारभ्यास्तमयपर्यन्तं तावद्घटिकात्मकाः प्रातःसङ्गवमध्याह्नापराण्हसायान्हनामकाः पञ्चकालाः । अस्तानन्तरं च तावद्घटिकात्मकः एकः कालः । तथा हिङ्कारादि

सप्तसामप्रतिपाद्यानि प्रद्युम्नादिरूपाणि च सप्तसङ्ख्याकानि भवन्ति । तत्र प्रथमकाले हिं सृष्टिं करोतीति हिङ्कारनामा । हिङ्काराख्यसामभक्तिप्रतिपाद्यः श्यामवर्णः प्रद्युम्नोऽनुदितसूर्येऽस्ति । तत्र स्थित्वा पशूनामाश्रयो भवति । हिङ्काराश्रितत्वादेव हि पशवो हिंशब्दं कुर्वन्ति । तत आदित्योदयानन्तरं प्रातःकाले प्रथमावताररूपत्वात्प्रस्तावनामा प्रस्तावसामप्रतिपाद्यो लोहित-वर्णो वासुदेवः सूर्येऽस्ति । स मनुष्याणामाश्रयः प्रस्तावाश्रितत्वादेव हि मनुष्याः कर्मप्रारम्भकामाः प्रशंसाकामाश्च भवन्ति ।

ततः सङ्गवकाले कल्यादिहेतुत्वादादित्यनामाऽऽदित्ये सामप्रतिपाद्यो नीलवर्णो वराहोऽस्ति । सर्वाश्रयोऽपि विशेषतः पक्ष्याश्रयो वराहस्य तदाश्रयत्वादेव वयांस्याकाशेऽनाधारदेशे स्वशरीरमादायेतस्ततश्चरन्ति । ततो मध्याह्नकाले तस्मिन्प्रणवेनोद्गीयमानत्वाद्वासुदेवादिमूर्त्युद्गमनहेतुत्वाच्चोद्गीथ-नामोद्गीतसामप्रतिपाद्य उद्यदादित्वर्णो नारायणोऽस्ति । स देवानामाश्रयः सर्वगुणपूर्णत्वरूपनारायणशब्दार्थवत्त्वेन तु तमुपास्यैव हि देवाः सर्वतः श्रेष्ठाः । ततोऽपराण्हकाले तस्मिन्प्रति प्रतिकार्येष्विदं जगद्धरतीति वा स्वं प्रत्येकीकरणाय स्वमूर्तिं हरतीति प्रतीहारनामा प्रतीहारसामप्रतिपाद्योऽति-नीलवर्णोऽनिरुद्धोऽस्ति । स गर्भाणामाश्रयः । अत एव मातुरुदरे प्रविष्टा-नामन्नादीनां जीर्यमाणत्वेऽपि पितृशरीरान्मातृशरीरमनुप्रविष्टानां गर्भीभवतां रेतआदिपदार्थानामेव तथैवावस्थानं तत्रैवाभिवृद्धिश्च दृश्यते । ततः सायान्हे काले तस्मिन्दुष्टोपद्रवर्कतृत्वादुपद्रवनामोपद्रवसामप्रतिपाद्योऽनन्तसूर्यसप्रभो नृसिंहोऽस्ति । स मृगाणामाश्रयः । अत एवारण्ये पुरुषादिभीता मृगाः कक्षं श्वभ्रं वा निश्शङ्कमुपद्रवन्ति । श्रीनृसिंहश्च तत्र स्थितत्वात् ततश्चरमकालेऽ-स्तमिते तस्मिन्संहारकर्तृत्वान्निधननामा निधनसामप्रतिपाद्यः शुक्लवर्णः सङ्कर्षणोऽस्ति । स पितॄणामाश्रयः । अत एव तेषामत्र पुत्रादिभिर्दीय-मानपिण्डादिप्राप्तिर्भवति । इत्येवमादित्यस्थस्य समरूपस्य हरेः सर्वाश्रयत्वमनुदिनमनुचिन्तनीयम् ॥

*इति सूर्यगतिप्रकरणम् ॥ ३ ॥*



## ॥ अथायुर्यज्ञप्रकरणम् ॥

॥ हरिः ॐ ॥ सर्वमुमुक्षुयोग्यमपरोक्षान्तरङ्गसाधनमिदमुपासनं गोप्यतमं शृणुत योग्याः । निरन्तरं परमादरेणैवमनुसन्दधीत । अहमेव विष्णु-पूजात्मकयज्ञरूपः । यज्ञारम्भात्प्राक् नारायणो देवता । प्रसिद्धयज्ञे सवनत्र-यमस्ति । अत्रापि तदस्ति । कथम् । पुरुषस्य शतमायुः । तस्य किञ्चित्पलाधिकविंशतिघटिकाधिकदशदिनाधिकदशमासात्मकवर्षविवक्षया षोडशोत्तरशतवर्षाणि भवति । तत्र भागत्रयम् । पूर्वश्चतुर्विंशतिवर्षात्मक एकः। तदुत्तरश्चतुश्चत्वारिंशद्वर्षात्मकोऽपरः । तदुत्तरोऽष्टचत्वारिंश-द्वर्षात्मकोऽन्त्यः । प्रसिद्धयज्ञः प्रातःसवनं माध्यंदिनसवनं तृतीयं सायं सवनमिति सवनत्रयात्मकः । तत्र प्रातःसवनं चतुर्विंशत्यक्षरात्मकगायत्री-छन्दस्कमन्त्रोपेतम् । अयमपि चतुर्विंशतिवर्षात्मककालोपेतः प्रातःसवनम् । प्रातःसवनस्य वासुदेवो देवता । प्रसिद्धे प्रातःसवने वासुदेवो देवता माध्यन्दिने रुद्राः । तृतीये आदित्याः । अत्र तु तत्त्वेशा एव सुखेन योग्यं प्राणिजातं वासयन्तीति वसुनामानः प्रातःसवनस्य देवताः ।

प्रसिद्धं माध्यन्दिनं चतुश्चत्वारिंशदक्षरात्मकं त्रिष्टुप्छन्दस्कमन्त्रोपेतम् । अयमपि चतुश्चत्वारिंशद्वर्षात्मककालोपेतो माध्यन्दिनसवनात्मकः । अस्य सङ्कर्षणो देवता । अत्र तत्त्वेशा एवायोग्यजनं रोदयन्तीति रुद्रनामानो देवताः। प्रसिद्धं तृतीयं सवनमष्टचत्वारिंशदक्षरात्मकजगतीछन्दस्कमन्त्रोपेतम् । अयमप्यष्टचत्वारिंशद्वर्षात्मककालोपेतस्तृतीयः सवनमित्युच्यते । अस्य प्रद्युम्नो देवता । तत्त्वेशा एवादानादिकारयितृत्वादादित्यनामानो देवताः । प्रसिद्ध-सवनेषु वस्वादयो यजमानप्रार्थिताः स्वाधिष्ठितकाले प्राप्तविघ्नान्निवारयित्वा यज्ञं समापयन्ति । अत्रापि प्रातःसवने भो वसवो विष्णुपूजात्मकयज्ञ स्वरूपस्य मम ज्वराद्युपद्रवेण यथा लोपो मा भूत्तथा रक्षन्त । भवतामाधिपत्ये एवं नोचितमित्येवं प्रार्थिता रक्षन्ति । एवमेवोत्तरसवनद्वयेऽपि द्रष्टव्यम् ।

प्रसिद्धे दीक्षोपसदः स्तुतशस्त्रे दक्षिणा सोष्यन्तीत्यसोष्यन्तीति व्यवहारोऽसौष्टेति व्यवहारोऽवभृथ इति सप्त सन्ति। अत्र यज्ञेऽशनायापिपासे व्याध्यादिसकलोपद्रवैः प्राप्तकष्टावस्था च दीक्षा स्वायम्भुवभार्या शतरूपा तदभिमानिनी । अशनपानसुखावस्थानि यजमानव्यापाररूपोपसद-संज्ञकानि। हासताम्बूलादिभक्षणमैथुनशवहतितद्दाहप्रभृतीनि स्तुतशस्त्र-संज्ञकानि । ऋक्षु सामगानं स्तोत्रम् । केवलं मन्त्रपाठस्तु शस्त्रम् । कायक्लेशादिरूपं वेदाभ्यासरूपं चिन्तनादिरूपं तपः। विद्यादानमन्नादिदानं चार्जवम्। अहिंसा सत्यवाक् चैतद्दक्षिणा। स्वायम्भुवो मनुस्तदभिमानी। पितुःसकाशान्मातुरुदरे प्रवेशे जनिष्यतीति यो व्यवहारः स एव सोष्यतीति व्यवहारः। स एवासोष्टेति व्यवहारः। मातुः सकाशादुत्पत्तौ यो जनित इति व्यवहारः स एवाकरोदिति व्यवहारः । मरणमेवावभृथस्नानम् । तत्र मन्त्रत्रयम् । अक्षतमस्यच्युतमसि प्राणशंसितमसीति । हे भगवंस्त्वं स्वरूपेणाक्षयोऽसि गुणैरच्युतोऽसि मुख्यप्राणादप्यधिकसुखोऽसीति मन्त्रार्थः। यज्ञान्तेऽनिरुद्धो देवता। एतस्योपासनस्योक्तमेव मुख्यं फलम्। रोगादिविघ्नपरिहार आयुरभिवृद्धिश्चेति द्वयमेवावान्तरं फलमिति । यस्मिञ्जन्मन्येवमनुसन्धानसामर्थ्यमीश्वरो ददाति । तत्रैवातीताशेष-देहानामेष्यतामपि सर्वेषामेवमेवेत्यनुसन्धेयम्। तेन भगवद्भक्तानां सर्वाण्यपि जन्मानि भगवत्पूजात्मकानि भवन्तीति ॥

*इत्यायुर्यज्ञप्रकरणम् ॥ ४ ॥*

## ॥ अथ वेदाध्ययनप्रकरणम् ॥

॥ हरिः ॐ ॥ समस्तवेदाध्ययनफलमस्यानुसन्धानस्य । तथा हि । ॐकारे सर्वगुणपरिपूर्णो नारायणः । तत्राकारे विश्वः कृष्णश्च । उकारे तैजसो रामश्च। मकारे प्राज्ञो नृसिंहश्च। नादे तुरीयो वराहश्च। बिन्दावात्मा विष्णुश्च। घोषेऽन्तरात्मा परं ज्योतिश्च। शान्ते परमात्मा परं ब्रह्म च।